†अ॒ना(न्-आ)पि[a]- -पिः ऋ [(१, १०२, ८) ८, २१, १३ (१०, १३३,२)]; १०,३९,६; कौ १, ३९९; २, ७३९; जै १, ४५, १; शौ २०, ११४, १.

अ॒ना(न्-आ)प्त, प्ता[b]- -प्तः ऋ १, १००, २; तै ७, १, १०, ३¶; काठ ८, ७¶; क ७, ४¶; -¶प्तम् तै २, ५, ११, ४;५, १, ९, १[२]; ६, १, २, ७[२]; मै १, ४, ११; ५, ७[२]; ११, ९; २, २, १२; ५, २; काठ १०, ८; -¶प्तस्य तै ७, १, ५, ६; -प्ता काठ ३८, १४[c]; -प्ताः[c] शौ ४, ७, ७; ५, ६,२; पै ६, ११, २; -प्ताम् तै ७,४, ५, ३¶; -प्तेन मै ४, २, ११.

अना(न्-आ)प्य[d]- -प्यम् ऋ ७,६६, ११.

अ॒॑ना(न्-आ)ब [, व] यु[b'e]- -॒यो शौ ६,१६, १; पै १९, ५, ७.

†अ॒ना(न्-आ)भयिन्[b'f]- -॒यिन् ऋ ८,२,१; कौ १, १२४; २, ८४; जै १, १३, १०; ३,८, १०.

अ॒॑ना(न्-आ)भव[b'g]- -॒व[h] काठ ६, ७; क ४,६.

अ-नाभि[i]- -भिः पै २०, ४१, २; -¶भिम् काठ २०, ७; क ३१,९.

अ॒ना(न्-आ)भु[b'j]- -॒भो मै १, ८, ५[h].

अना(न्-आ)भुव- -वः, -वे पै २०, ५९, ४.

अना(न्-आ)भू[k]- -भुवः ऋ १, ५१, ९.

?अ॒-नामग[b'l]- -गः शौ १९,४५,२.

(तु. नाउ. अप्यपरस्थै ग्यु.)। अत्र अ॒ननु-भूति- इति पपा. तदनुवर्त्तिनी चोभयी प्रागर्वाचामभिप्रवृत्तिः द्र.। तद् यथा। बस. (= अनुभूति-रहित[1]- [प्रजा-]) इति वें. सा.। उक्ततः बस. वा तस. [तु. स्क.] वेति विकल्पितोऽर्वाग्वश्च (तु. GW. MW. NW.)। उभयत्र अ॒नु°>आनु° इति दीर्घापत्तेश्च सांहितिकं निपातनं द्र.। यथा चैवनन्यतरतोऽपि साध्वन्वयाभावो भवतीत्यत्र भूयः वैश. अनुसंधेयम्।

a) विप.(अस्मद्-,इन्द्र-)। बस. नञ्-पूर्वं इति प्रागर्वागभ्यर्हिता आहुः। तत् कथं नान्तोदात्तः (पा ६,२,१७२) इति चोद्यम्। तत् साध्यं कथमिति। तस. भवतु न बस. इति। तेन तावत् सौवरी चातुरक्षी कामं निष्पद्यताम् (पा ६, २,२) न त्वाऽऽर्थीति (आपि-रहिते वृत्तेर्नाऽऽपि-भिन्न इत्यभिसन्धेः)। उच्यते। इह उप. बस. भवत्विति। सोऽपि कल्पनामूलत्वाद् विकल्पितविग्रहः द्र.। तद् यथा। नञ उत्तरस्य (सहु>)*साऽऽपि- इति मूलतः सतो नैरुक्तिकः सकारलोपो नकारोपजनश्च स्यातामिति प्रथमः कल्पः (तु. अ॒गोपा-)। 'आ॒(ऽऽप्ताः) आप॒यो-ऽनेनाऽनया वा' इति माध्यमिकधातुजलोपे सति *आऽऽपि- इति उप. इति द्वितीयः कल्पः (पावा २, २, २४)। 'अ॒न्- (आप्ताः) आप॒योऽनेनाऽनया वा' इति नञ्मात्रातिरिक्तस्य धातुजांशस्य पूप. लोपे सति बस. पूप. प्रकृतिस्वरम् इति कृत्वा नञ्मात्रस्य पूप. स्वरः प्रकृत्येति च तृतीयः कल्प इति दिक् (चरमश्चायं प्रकारः नापू. अपि द्र.)।

b) तस. नञ्-स्वरः।

c) सपा. अ॒नाप्ता (आपश्रौ १६, १८, ७ वैश्रौ १८, १५ : २० हिश्रौ ११, ६, २९ च) <> अ॒नाप्ताः इति पाभे.।

d) विप. (क्षत्र-)। तस. नञ्-स्वरापवादः कृत्योकीयः स्वरः (पा ६,२,१६०)।

e) नाप.। आबयुं सन्नेव तदुपशमनायैव नञ्-पूर्वत्वेन आम्नेत। °व° इति पै. पाठः।

f) विप. (इन्द्र-)। उप. आ √भी + कर्तरि इनिः प्र. (तु. पा ३,२, १५७) इति वा *आ॒-भय-(प्रास.) + मत्वर्थे इनिः प्र. (पा ५, २, ११५) इति वा।

g) विप. (मृड- [रुद्र-])। उप. आ-भ॒व*- (आ √भू+ अच् प्र.)। एस्थि. माध्यमिकेरेफोपजनः सुपा. चिन्त्यः।

h) सपा. अनाभव <> अ॒नाभो (माश्रौ १, ६, १, ४१ वाश्रौ १, ५, २, ४० च) <> आपश्रौ ६, ११, ३ भाश्रौ ६, १३, २ हिश्रौ ३, ७, ८६ ?अनाभंव इति पाभे.। i) विप. (अग्नि-)। बस.।

j) वैतु. BW. MW. °भू- इति।

k) तस. नञ्-स्वरः। उप. १आ-भू- यद्र.।

l) विप.। उप. ?*नाम-ग-('नाम्ना गच्छति' नाम-भृदित्यर्थः) इति तत्त्वतः पर्येष्टव्यम्। कथमिति। मूको. बहुविकृतत्वेनोपलम्भात् (तु. शंपा.)। यत्तु सा. अ-नामक- इति पठित्वैव बस. उप. = नामभृत्- इति व्याचष्टे, तदसत्। तथा सति कपिपूर्वीयः स्वरः स्यात् (पा ६, २, १७३)। सपा. पै १५,४,२ माम् अगतस्य इति पाभे. यच्छ्रूयते तेनापि सुगमो निर्वाह इति। Lanman अनास्माक- इति शोधप्रस्तावो विमृश्यः।

!अनामन[a]- -नात् शौ १२, ४, ५; ८; पै १७, १६, ६;८.

१अ्नाा(न्-आ)मय[b]- -यिः पै १६, ५, ७[c].

२अना(न्-आ)म(य्>)या[d]- -या खि ५,१५, ५?[e]; शौ २०, १२९, २०;-याः शौ ९,१३,१३-१८; पै १६, ७५, ३-८.

अ्ना(न्-आ)मयत्[b'f]- -यत् मा १८, ६; का १९, ४, २; तै ४, ७, ३, २; मै २, ११, ३; काठ १८, ९; क २८, ९; पै १०,१२, १; १९, २२, १४.

†अना(न्-आ)मयित्नु[g]- -त्नुभ्याम् ऋ १०, १३७, ७; शौ ४, १३, ७; पै ५, १८, ८.

अ-ना(मक>)मिका- -काम् पै १७, १५, ९.

†अ्-नामिन्[b'h]- -मि ऋ ३,६२,५[f]; ६, ८, ६; तै १, ५, ११, २; मै ४, ११, १; काठ ४, १६.

अना(न्-आ)मृण[j]- -णः ऋ १,३३, १.

¶अ्ना(न्-आ)मृत[k]- -तम् तै ५, २, ३, १; काठ ७, १२[l]; २०, १; २२, ६[l]; क ६, २[l]; ३१, ३; ३४, १[l]; -ते तै ५,२, ३, २; काठ २०, १; क ३१, ३.

अ्ना(न्-आ)यत[b'm]- -तः ऋ [४, १३,५; १४, ५.]

¶अना(न्-आ)यतन, ना[d]- -नः मै ३, ४, १०; ४, ७, ६; काठ १०, ३[n]; २६, ३; २८, ३; ३०, ७; ३४, ९; ३५, १८; क ४१, १; ४४, ३; ४८. १६; $शौ ११, ४, १८; $ पै १६, ५८, ४; ५; -नम् मै ३, ४, १०; ४, ७, ६; काठ २१, ८; २६, ३; क ४१, १;-नाः तै ३, १, ९, २; ३; ७, १, ५, ४; मै ३, ८, १; १०, ५[l]; काठ २४, १०; २९, १[l]; क ३८,३; ४५, २[l]; -नानि काठ १२, ५, -ने[o] मै १, ६,११; ३, १, ४; ४, ४; ७, ७; ४, ५ २; ८,५; काठ ३५, १८; क ४८, १६.

अना(न्-आ) युध[d]- -धासः ऋ ४, ५, १४; ८, ९६, ९.

¶अ्ना(न्-आ)रब्ध[b]- -ब्धः तै ६, ४,२, १.

¶अ्ना(न्-आ रभ्य[b] तै १, ६, ८, १[p]; काठ ३२, ७[q]; ३६, ११.

अना(न्-आ)रम्भण[d]- -णः तै २, ६, ५, ६; -णा काठ २१, ८; -णे ऋ १, ११६, ५; [१८२, ६; ७, १०४, ३]; खि १, २,१; शौ ८,४, ३; पै १६, ९, ३.

अ्ना(न्-आ)रूढ- -ढः पै१६,७२,६.

¶अ्ना(न्-आ)र्त, र्ता[b]- -र्तः तै ३, ४, ३, ६; काठ १२ १०[r]; -र्तम् पै ९, २२, २४; -र्ता; तै ७, ५, १, ३; -र्ताम् काठ ३५, १९; क ४८, १७; -र्तेन मै २, ४, १[r].

¶अ्ना(न्-आ)र्त्ति[b]- -र्त्यै तै २, ६, ९, ३; ८; ३, १, ७, १; २, ४, २[l]; ५; ७, ४, २, ४.

अ्ना(न्-आ)र्त्विजीन[b]- -नः काठ

a) पाठः? पपा. नावग्रहः। अ् + (भावार्थे) आ-मन्- (<आ √मन्) इति बस. अन्तोदात्तः (पा ६, २, १७२) इतीव च W., अ् + आमन- (√अम् [रोगे] > आमि + भावे ल्युट् प्र.) इतीव च LR. द्र.।

b) तस. नञ्-स्वरः।

c) अयं सुपा. अनामयत् इति मूको. स्थाने संस्कारमान्द्याद् धृतः। -यम् इति अस. द्वि१ सत् क्रिवि. इत्येव सुपठम्।

d) बस. अन्तोदात्तः (पा ६,२,१७२)।

e) अनामया इति सुपा. स्वरः शोधापेक्षः।

f) भाप. (नैरुज्य- [=१अ्नामय-])। उप. क्रुत तु. टि. (√आम् >) √*आमि इति।

g) विप. (हस्त-)। तस. उप. इत्नुच् प्र. (तु. पाउ ३, २९)। नञ्-स्वरापवादः कृयोकीयः स्वरः उसं (पा ६ २,१६०)।

h) विप. (ओजस्-, क्षत्र-)। उप. √नम् + ताच्छीलिकः णिनिः प्र.।

i) सपा. तैब्रा २,४,६,४ अनामि इति पाभे.।

j) विप. (इन्द्र-)। बस. अन्तोदात्तः। उप. आ √मृण् + कः प्र. (पा ३,१, १३५)।

k) नाप. ([मृत्युनाऽनाक्रान्त] देवयजन-देश-)। उप. आ √मृ + क्तः प्र.।

l) सपा. तै ५,६,४,२ अमृतम् इति पाभे.।

m) उप. आ √यम् + क्तः प्र.।

n) सपा. मै २,१,२ आयतनवत्तरः इति पाभे.।

o) पाभे. अनग्नौ तै ५,१,३,१ द्र.।

p) सपा. मै ४,१,४ अनालभ्य इति पाभे.।

q) सपा. मै १,४,१० अनालभ्य इति पाभे.।

r) सपा. अ्नार्तः <> अ्नार्तेन इति पाभे.।

१३, ४.

अना(न्-आर्य>)र्या- -र्या पै २, ३१, २.

?अनार्षि- -र्षम् पै ८० ६१, ७

अना(न्-आ)र्षेय[a]- -याणाम् शौ ११, १, ३३; पै १६, ९२, ३; -याय मै ४, ८, ३¶.

¶अना( न्-आ )लब्ध, ब्धा[a]- -ब्धम् तै ६, ३,५,२; -ब्धा[b] काठ २४,३; क ३७,४.

¶अना(न्-आ)लभ्य[a] मै १, ४,१०[c]; ४, १, ४[d,e]; ५, ६; काठ २७, ६;३१,३[e]; क ४२,६; ४७, ३[e].

अना(न्-आ)लम्बु(क>)का[f]- -का काठ ३५, १८[g].

अना(न्-आ)लम्भु (क>)का- -का क ४८, १६[g].

?¶अना(न्-आ)लेश[h]- -शे तै ५, १, ५, ५.

अना(न्-आ)वयस्[i]- -याः शौ ७, ९५, ३.

†अना(न्-आ)वि(द्ध>)द्धा[a]- -द्धया ऋ ६, ७५, १; मा २९, ३८; का ३१, २, २; तै ४, ६, ६, १; मै ३, १६, ३; काठ ४६, १; पै १५, १०, १.

अना(न्-आ)वृत्[a]- -वृत् ऋ १०, ९५, १४.

अना(न्-आ)वृ(त्त>)त्ता[a]- -त्ताम् शौ १५, ६,१९.

अना (न् आ) व्या(ध>)धा[j,k]- -धाम् शौ १४,१, ६४; १८,१, १२[l].

१¶अना(न्-आ)व्रस्क[a,m]- -स्काय तै ३, १,५,१; ६,१, १०, ३; ३, ८, ३.

२अना(न्-आ)व्रस्क[m,n]- -स्कः शौ १२, ४,४७; पै १७, २०, ७.

†अना(न्-आ)शस्त[j]- -स्ताः ऋ ⌊१, २९, १; २, ४१, १६⌋; शौ २०, ७४, १.

¶अना(न्-आ)शीर्क[n]- -र्केण तै १. ६, १०, ४.

अना(न्-आ)शीर्दा[a,o]- -र्दाम् ऋ १०,२७, १.

†?अना(न्-आ)शु[p]- -शवः ऋ १, १३५, ९; ८, १, १४; शौ २०, ११६, २; -शुः खि ५, १३, ६; -शुना ऋ ६,४५,२; -शोः ऋ १०,३९,३.

¶?अनाशुमवन्ति[q] काठ २३, ३[1].

---

[a]) तस. नञ्-स्वरः ।

[b]) सपा. तै ६,१,७,५ अबद्धा इति, मै ३,७,६ अबद्धया इति च पाभे. ।

[c]) पाभे. अनारभ्य काठ ३२,७ द्र. ।

[d]) पाभ. अनारभ्य तै १,६,८,१ द्र. ।

[e]) सपा. तैब्रा ३,२, ४,३ अनुपस्पृश्य इति पाभे. ।

[f]) सस्व. कृते तु. टि. अ-क्षोधुक- । उप. <आ (र>)ल(म्भ>) म्ब् द्र. ।

[g]) सपा. °लम्बुका<>°लम्भुका (तैब्रा ३, ७, १,९ च) इति पाभे. ।

[h]) अन्-आ° (वैतु. पपा. अना-ले°) इति कृत्वाऽर्थाभावे अस. ( =ग्रासाऽभाव- ) अन्तोदात्तश्च । उप. आ √(रि>)लिश् (ग्रसने)+ कर्मणि घञ् प्र. थादि-स्वरश्च (तु. BW ; वैतु. भा. वि१. सत् अल्पीभावे धा. वृत्तिरिति, सा. पपा. अनु अना- ⌊अन्न-⌋+लेश-⌊षस.⌋ इति)।

[i]) विप. (शेप-)। उप. आ-वयस्- इति विप. बप. यत्र उप. २वयस्- ( भाप. ⌊प्रजन-⌋ <√वी ) इति । यत्तु WI. आकारान्तं प्राति, निरदेशि तदप्रमाणम् ।

[j]) बस. अन्तोदात्तः ।

[k]) उप आ √व्यध् +भावे घञ् प्र. ।

[l]) अन° इति पाठः ? यनि. शोधः (तु. मूको.) ।

[m]) उप. आ+व्रश्च् + भावे घञ् प्र. कुत्वञ्च (पा ७, ३,५२) ।

[n]) विप. (⌊आशीरहित-, निष्फल-⌋-यज्ञ-) । सस्व. कृते अ-चर्मक- टि. द्र. । अयस्मयादित्वञ्च उसं. ( पावा १, ४, २० ) तेन पदत्वाद्रुत्वं भत्वाद्विसर्जनीयाभावश्च । यत्तु भा. नञ्सुभ्याम् (पा ६,२,१७२) इत्यन्तोदात्तत्वमाह तद् भ्रान्तमिव स्यात् ।

[o]) विप. उप. आशिर्-+√दा 'दाने' (तु. षष्ठो मन्त्रः, ऋ ८,३१,२ प्रभृ., वें ⌊=आशिर-⌋, सा. WAG. ⌊१.३८⌋ BL GRV.; वैतु. PW. प्रभृ आशिस्- इति) ।

[p]) अर्थः व्यु. च ? तस. चार्वादित्वम् उसं. तेन नञ्स्वरापवादोऽन्तोदात्तो भवति (पा ६,२,१६०)। उप.=क्षिप्र- इति च =अश्व-(ऋ १,१३५,९) इति च कृत्वा GW. प्रभृ. अन्-आशु- इत्यवग्रहः । उप. आशु- = अशन-⌊भोजन-⌋ इति कृत्वा < √अश् 'भोजने' इति वें., ⌊पक्षे⌋ सा. (ऋ १,१३५,९); अ-नाशु- (नाश-रहित-) इति सा. (ऋ १०,३९,३) ।

[q]) पाठः ? अनु ( पश्चात् )+ *आ-शुच्- >प्रास. *अन्वा(नु-आ)शुच्- (पश्चात् तापग्राहिन्-)>*अन्वाशुग् √भू>*अन्वाशुग् भवत्- >-वन्ति>नैप्र. यनि. इति मतम् ।

?अनाशुरश्चायामी[a] शौ २०, १२८,१०.
?अनाशुरश्व आयामी[a] खि ५,१३, ६.
¶अना(न्-आ)श्वस्[b]- -श्वान् तै १, ६,७,३;४[2].
अ-नाष्ट्र- -ष्ट्रः पै १०,२,५; -ष्ट्रम् पै ५,२८,२.
अना(न्-आ)स्[c]- -नासः ऋ ५,२९, १०.
अ-नासिक[d]- -काय तै ७,५,१२,१; काठ ४५,३.
¶अना(न्-आ)स्क(न्न>)न्ना- -न्ना[e] काठ १२,१३.
?अनास्त[f] पै ७,८,९.
अना(न्-आ)स्थान[g/d]- -ने ऋ १, ११६,५.
? अना(न्-आ)स्माक[h]- -कः शौ १९,५७,५; -कम्[i] शौ १९, ५७,४.
?अनास्य[j]- -०स्यौ क २,१.
अना(न्-आ)स्राव[d/k]- -वम् शौ २, ३,२; पै १,८,२; १९,१३,१४; ५२,१६;२०,३३,८.
अना(न्-आ)हत[l]- -तः पै २,३१, ४.
अनाहत-शी(र्षन्>)र्ष्णी[m]- -र्ष्णी तै ३,२,५,१.
¶अना(न्-आ)हित[l]- -तः मै १, ६,४.
¶*अनाहिता(न्-अ)ग्नि[n]- -ग्नेः काठ ८,७;८,११; क ४६; ७ ८; -ग्नेः काठ ९,१५.
?अना(न्-आ)हुत[o]- -तम् पै ६, १४,१.
¶अना(न्-आ)हुति[l]- -तिः तै ५, ४,१,२; -तिम् ऋ १०,३७, ४;६३,१२; पै १७,२५,७;८.
¶अ-निखात, ता[l]- -तः काठ ३७, १६; -ता[p] मै ३,८,९.
अनितभा[q]- -भा ऋ ५,५३,९.
¶अ-निधाय[l/r] मै १,६,६.

---

[a]) अना(न्-आ)शुर् अश्वः (|सु-आयाम- >| स्वायामिन्->) स्वायामी (प्र१) इति त्रि-पदः शोधः (तु. टि. ?श्वाशुरश्चायामी ; वैतु. RW. अनाशुरश्वो-ऽयामी इति)। सपा. शांश्रौ १२,२१,२ अनाशुरश्वायामी इति पाभे.।

[b]) तस. नञ्-स्वरः। उप. √अश्(भोजने) + क्वसुः प्र. (पा ३,२,१०९)।

[c]) विप. (|मूक-| दस्यु-)। बस. अन्तोदात्तः। उप. आस्- [=आस्य- (तु. |सकक्षम| मृध्रवाचः इति; वैतु. वें. अन्- (<√अन् 'प्राणने') Gri. अ-नास्- इति]।

[d]) विप.। बस. अन्तोदात्तः (पा६,२,१७२)। उप. यद्र.।

[e]) पाभे. अनधिस्कन्ना द्र.।

[f]) पाठः? अना(न्-आ)प्त- > -प्तम् (यज्ञम्) इति शोधः संबन्धश्च द्र.।

[g]) विप. (समुद्र-)।

[h]) तस. नञ्-स्वरे प्राप्ते चार्वादिषु उसं. अन्तोदात्तः (पा ६,२,२;१६०)। उप. (अस्मद्->) अस्माक- +अण् प्र (पा४,३,२)। यद्वा अस्माक-(यद्र.) इत्यतः प्राति. भावे अणि प्र. उप. निष्पन्ने सति बस. अन्तोदात्तः (पा ६, २,१७२) इत्येवं सुवचतरं द्र.।

[i]) सपा. पै ३,३०,४; ५ ?सास्माकम् इति पाभे.।

[j]) वास्तविकः पाभे. वा अनश्रु- इत्यत्र (यद्र.) प्रामादिकविकारमात्रं वेति विमृश्यनाम (तु. संटि.)। प्रथमे कल्पे अ-नाम्य- इत्यत्रं पदविभागः स्यात्। अन्-आस्य- इत्येवं वेत्यपरो गवेषणार्हो विषयः।

[k]) विप. (|आस्रावाणाम् अतीसारादीनां निवर्तक-| उत्तम-भेषज-)।

[l]) तस. नञ्-स्वरः। उप. यद्र.।

[m]) विप. (|अप्रतिबद्धप्रारम्भा-| वाच्-)। बस. पूप. प्रकृतिस्वरम्। उप. शीर्षन् + ङीप् प्र. उपधालोपश्च (पा ४,१,२८; ६,४,१३४)।

[n]) बस. पूप. प्रकृतिस्वरः। अन्-आहि° इत्येवं तस. नञ्-स्वरे (पा ६,२,२) स्वरतः समाने संभवत्यपि यदसौ नोररीकृतस् तत्र नञः क्रियार्थरूपगुणप्रतिषेधे वर्तमानाया मुख्याया वृत्तेः क्रियावतः परावयवस्याऽऽहितत्वस्य समासान्तरोपसर्जनीभावे सति बाधो मा भूदित्येतद् बीजं द्र.। अर्थनित्यत्वेन परीक्ष्यत्वाल् लक्ष्यलक्षणानामित्यभिसन्धेः।

[o]) पाठः? अना(न्-आ)हतम् इति शोधः। स्वयमनाहतः सन्नन्यस्य सर्वस्याऽवध्यस्यापि सनो भक्षकः (तु. पै ३,२७,२) इत्येवं प्रकरणसंगतेः।

[p]) पाभे. अगर्तमितम् काठ २५,१० द्र.।

[q]) =नदी-विशेष-। पपा. नावग्रहः। तस. नञ्-स्वरः। उप. *इत-भा- (बस.) इति पदविभागकल्पना व्यु. निमित्तमात्रतया गृह्येत।

[r]) उप. नि √धा + क्त्वा > ल्यप् प्र.।

†अनि(न्-इ) ध्म[a]— -ध्मः ऋ २. ३५,४;१०,३०,४; तै २,५,१२, २; शौ १४,१,३७; पै १८,४,६; –ध्माम् ? मै ४, १२,४‡[b].

अनि(न्-इ)न[a]— -नस्य ऋ १,१५०, २.

अ-निन्दा[c]— -न्दाः शौ ११ १०,२२; पै १६, ८७, २.

अ-निन्द्य[d]— -न्द्यः ऋ ९, ८२, ४; –०न्द्या ऋ १, १८०, ७.

अनि (न-इ) न्द्र,न्द्रा[e]— -न्द्रम् ऋ ७, १८,१६; –न्द्राः ऋ १, १३३, १; ५, २, ३; १०, ४८, ७; –न्द्रान् ऋ १०,२७,६; –न्द्राम् ऋ ४, २३, ७.

अनि (न्-इ)न्द्रिय— -याः पै १६, ७६,९[f].

†अ-निपद्यमान[c]— -नम् ऋ ⌊१, १६४, ३१; १०,१७७,३⌋; मा ३७,१७; का ३७.३,४; मै४,९, ६: शौ ९, १५, ११[g]; पै १६, ६८,१०.

अ-निबद्ध[c]— -द्धः ऋ ⌊४, १३, ५; १४, ५⌋.

अ-निबाध[h]— -धे ऋ ३, १, ११; ⌊५. ४२, १७; ४३, १६⌋.

अ-निभृष्ट,ष्टा[i]— -ष्टः ऋ १०, ११६, ६; शौ १९,६०, २; –ष्टम् मा १०, ६; का ११, ४, २; तै १, ८, १२, १; मै २, ६, ८; ४, ४, २[?];¶; काठ १५, ६;–ष्टाः तै १, ८, १२, १[j].

?अनिभृष्ट-तविषि[k]— -षिः ऋ २, २५,४; ५,७,७.

अनिभृष्ट-तेजस्— -जाः काठ १८, १६; क २९,४.

†अ-निमान[l]— -नः ऋ १,२७,११;६, ६२,७; कौ २,१०१४; जै ४,९, ५; शौ २०, ३६, ७.

अ-निमिष्[c]— -मिषा[m] ऋ ३, ५९,१; ७, ६०, ७; तै ३, ४, ११,५[n]; काठ २३,१२;३५, १९; क ४८, १७.

१अ-निमिष[c]— -षम्[o] ऋ ५,१९,२; ७, ६१, ३.

†२अ-निमिष[a]— -षः ऋ १०, १०३, १; मा १७,३३; का १८, ४,१; तै ४, ६,४, १; मै २, १०, ४; काठ १८,५; क २८, ५; कौ २, ११९९; शौ १९, १३,२; पै ७, ४, २; –षम्[o] ऋ १, २४, ६; –षाः ऋ २, २७,९; –षेण ऋ १०, १०३, २; मा १७, ३४; का १८, ४, २ ; तै ४, ६ , ४,

---

[a]) विप. । बस. अन्तोदात्तः (पा ६, २, १७२) । उप. यद्र. ।

[b]) पाठः? °ध्मः इति शोधः (तु. सपा. ऋ २,३५,४) । अस्मे इति पपा. (तु. संटि) यः पाभे. भवति सोऽपि शोध्यः ।

[c]) तस. नञ्-स्वरः । उप. यद्र. ।

[d]) विप. (अश्विन्-, सोम-) । तस. उप. ण्यदन्ते कृति कृत्योकीयः स्वरः (पा ६,२,१६०) ।

[e]) विप. [(इन्द्रमगणयत्- ⌊तु. या ३, १०⌋, अनैश्वर्य-) द्रुह्-, शत्रु- प्रभृ.] । बस. अन्तोदात्तः ।

[f]) सपा. शौ९,२,१० निरिन्द्रियाः इति पाभे. ।

[g]) अनिपद्य° इति मुपा. स्वरतः शोधार्हः (तु. सपा. ऋ प्रभृ.) ।

[h]) विप., भाप. [बाधाराहित्य-, स्वातन्त्र्य- (तु. सा. ⌊ऋ ५,४३,१७⌋, GW. प्रभृ.; वैतु. वें. सा. विप. इति च उरु- इति नाप. इति च ⌊तु. स्वरः, Knauer KZ २७,१५⌋)] । बस. अन्तोदात्तः । उप. नि √बाध्+भावे घञ् प्र. ।

[i]) विप. ( इन्द्र- प्रभृ. ) । उप. < नि √*भृष् 'हिंसायाम्' ( वैतु. PW. GW. प्रभृ. <नि √भ्रंश्, इति, उ. म. <नि √भ्रस्ज् इति च) ।

[j]) पाभे. अनाधृष्टाः मा १०,७ द्र. ।

[k]) विप. (ऋभु-,ब्रह्मणस्पति-) । बस. पूप. प्रकृतिस्वरम् (तु. टि. अनाहिताग्नि- यत्रत्यया दिशा तस. नेह लब्धादरः)। ?अनिभृष्टत्विषिः इति शोधः संभाव्येत ।

[l]) विप. (अग्नि-, इन्द्र-) । बस. अन्तोदात्तः । उप. नि √मा (माने ) + ल्युट् प्र. ।

[m]) तृ१ सत् प्रयोगतः क्रिवि. द्र. (तु. GW. MW. वैतु.PW. <१अ-निमिष- (⌊=नाउ.⌋ इति मन्वानो विमृश्यः ⌊तु. NW.⌋) ।

[n]) उप. कर्तरि कः प्र. इति तृ१ =द्वि३ इति च कृत्वा देव-पर्यायित्वेन यद् भा. विकल्पेन व्याचष्टे तत् क्लिष्टकल्पनाऽव्यभिचरितं द्र. ।

[o]) द्वि१ सत् वा. क्रिवि. द्र. । °मिष्-> एतद् रूपम् इति प्रतिपन्नौ GW. MW. च चिन्त्यौ द्र. । प्रयोगत एतत् क्रिवि. भवतीत्यभ्युपगमसामान्ये सति नापू. न. द्वि१ अनिमिड् इत्याकारकं स्यान्न यनि. इत्यनुपपत्तिदर्शनादिति दिक् ।

१; मै २, १०, ४; काठ १८, ५; क २८,५; कौ २,१२००; शौ १९,१३,३; पै ७,४,३.

अ-निमिषत्[a]- -षद्भिः ऋ [१, १४३,८ (६, ८,७)]; -षन्तः ऋ १०,६३,४.

†अ-निमेष[a]- -षम्[b] ऋ १,३१,१२; १६४, २१; मा ३४, १३; का ३३,१,७; शौ ९,९,२१; पै१६, ६७,१२.

१अ-नि(न्-इ)र[c]- -रेण ऋ ४,५,१४.

२अ-नि(न्-इ)रा[a,d]- -राः[e] ऋ ८, ४८,११; मा ११,४७; का १२, ४,११; मै २,७,५; काठ १६,४; -राम् ऋ ७,७१,२;८,६०,२०; १०,३७,४; खि ५,२१,३; मा १२, १०५; का १३,७, ४; तै ४, २,७,२; मै २,७,१४; काठ १६, १४; क२५,५; शौ२०,१३५,१३; पै १७,२५,७[f];८.

अ-निराधान[f]- -नाय काठ८,१०; क ७,६.

अ-निरा(र्-आ)हित[g]- -तः शौ १२, २,३५;३६; पै १७,३३,६.

¶अ-निरुक्त, क्ता[a]- -क्तः तै ७, ४, २, ३; मै १, १०, ५; ११, ९[2h]; ३, ६, ५; ४ १, १०[i]; काठ १२, ९; १४, १०[2]; २०, ५[j]; २५,८; २६,१[k]; २८, १०; ३३,४; ३५, २०; क ३१, ७[j]; ३८, १; ४०, ४; ४५, १; ४८, १८; -क्तम् तै ६, २,७, ३; मै ३, २, ५[j]; ४, ६; ८,९; ४,८, ६; काठ ६, ५; ९,१५[a1]; १६; २९,४; ३२,१[z]; क ४,४; ४५ ५; -क्तया मै ३, ६, ५; ४,८, ६; -क्ता काठ १२,९[m]; -क्ताः मै ३,४,६;८,१०[2k]; काठ १४, १०[2h]; -क्तानि काठ २१, २[l]; क ३१,१७[2]; -क्तान् तै २,५, ७,३; काठ ३६,१३.

?अ-निरुक्त-सामन्[n]- -मा काठ १४,१०.

¶अ-निर्ऋतिगृहीत[o,a]- -तम् मै ४, ३,१.

¶अ-निर्घात[a]- -ताय तै ३,१,८,३; २,४,२; मै ४,४,४.

¶अ-निर्दाह[a,p]- -हाय तै २,३,६,२; ७,४; मै २, ३ ७; ३, ३, ३; ४,१, ९; काठ १२, ५; ३१,७; क ३०,२[q];३[q]; ३१,७[q];१८[q].

अ-निर्दाहुक[r]- -कः मै १,४,८; काठ ३२,४.

¶अ-निर्दिष्टभाग[a]- -गः तै २, २, ४,६.

¶अ-निर्मार्ग[a,s]- -र्गाय मै१,८,५;२, ३,१[t];४,१,६[t];४,१; काठ १२, ५;८;१३; २४, १०; क ३७,७[t]; ३८,३.

¶अ-निर्याच्य[a] तै ५,२,३,१; मै ३, १,३;२,३; काठ २०,१;३०,९; क ३१,३.

¶अ-निर्वाह[u,a]- -हाय मै ४,८,५.

¶अ-निर्वीर्य[a]- -र्यः[v] काठ २८, ८; क ४०,८.

अ-निर्हत- > आनिर्हत[w]- -तेभ्यः

a) तस. नञ्-स्वरः। उप. यद्र.।

b) १अनिमिषम् टि. द्र.।

c) विप. (वचस्-)। बस. अन्तोदात्तः। उप. <इरा- भाद्र.।

d) उप. भाप. (अन्न-बलाद्यभाव-, आर्ति-)।

e) अनिरा अमीवाः (माश ६, ४, ४, १६ च)> ...४, १,४,४; ५, १,५,९ अमतीः, अरातीः इति ...।

f) उप. =१निराधान- यद्र.।

g) उप. <निर्- आ√धा।

h) सपा. अनिरुक्तः<>अनिरुक्ताः<>तां १८, ६,८;९ अनिरुक्तम् इति पाभे.।

i) निरुक्तः इति पाठः? यनि. शोधः।

j) सपा. अनिरुक्तः<>अनिरुक्तम् इति पाभे.।

k) सपा. अनिरुक्तः<>अनिरुक्ताः इति पाभे.।

l) सकृत् सपा. मै १,९,७ अप्रयुक्तम् इति पाभे.।

m) सपा. तैब्रा १,८,५,५ अनिरुक्तया इति पाभे.।

n) यनि. सुपा. चिन्त्यो भवति। निरुक्त-सामन्-(यद्र.) इत्यस्याऽनञः प्राति. एव प्राकरणिकत्वात् (तु. मै १, ११,९)।

o) उप. तृस. निर्ऋति-गृहीत- इति।

p) उप. निर् √दह् + भावे घञ् प्र.।

q) यक. सपा. काठ १२, ४; ५; २०, ५; २१, ३ अनुद्दाहाय इति पाभे.।

r) तु. टि. अ-क्षोधुक-।

s) उप. निर् √मृज् + भावे घञ् प्र.।

t) सपा. मै ३, ७, ७ अपद्दाहाय इति, काठ २५, ६ अनुद्दाहाय इति पाभे.।

u) उप. निर् √वह् + भावे घञ् प्र.।

v) सपा. मै ४,७,४ इन्द्रियवान् इति पाभे.।

w) विप. > नाप. (रुद्र-)। स्वार्थे अण् प्र. (तु. PW. प्रभृ.; वैतु. सा.[का.], उ. म. च गस. <आ-निर् √हन् [गतौ] इति ?, सा. [तै.] धा. हिंसार्थे वृत्तिरिति कृत्वा बस. इति ?)।

मा १६,४६; का १७,७,५; तै ४,५,९,२; मै २,९, ९[a]; काठ १७,१६; क २७,६.

**१अनिल-, २अनिल-** √अन् द्र.

**अ-निविशमा(न>)ना**[b]- -नाः ऋ ७,४९,१.

**अ-निवीर्य**[b]- -र्यः काठ २७,९.

**अ-निवृत**[b]- -तः ऋ ३,२९,६.

†**अ-निवेश(न>)ना**[c]- -नानाम् ऋ १,३२,१०; पै १३,६,१०.

**अ-निशित, ता**[b,d]- -तः मा १, २९; का १,१०,९; काठ ३१, १४; -तम् ऋ २,३८,८[e]; ९,९६,२[f]; तै ४,७,१५,४[g]; -ता[h] मा १,२९; का १,१०, ९; -ताः[h] मै ४,१,१२[२]; काठ १,१०,३१ ९[२]; क १,१०; ४७,९[२]¶.

†**अनिशित-स(र्ग>)र्गा**[i]- -र्गाः ऋ १०,८९,४; कौ १,३३९; जै १,३५,८.

**अ-निःशस्त**[j]- -स्ताः ऋ ४,३४,११[k].

**अ-निषङ्ग**[l]- -ङ्गाय ऋ १,३१,१३.

**अनि(न्-इ)ष(व्य>)व्या**[m]- -व्याः ऋ १०,१०८,६

?**अ-निषिञ्चन**[n] पै १५,१५,९

?**अ-निषित**[o]- -तम् मै ३,१६,५; काठ २२,१५.

**अ-निष्कृत**[b]- -तः पै ३,३३,४[p]; -†तम् ऋ ८,९९,८; ९,३९,२; कौ २,२४९; जै ३,२१,१४.

**अ-निष्कृति-** -त्या पै ३,१७,३.

¶**अनि(न्-इ)ष्ट,ष्टा**[b]- -ष्टः काठ३५,१७; क ४८,१५; -ष्टम् तै ६,६,६,२; -ष्टाः तै २,६,१,५; -ष्टेभ्यः काठ ५,४;३२,४; -ष्टेषु काठ ३५,१८; क ४८,१६.

¶**अनि(न्-इ)ष्टक**[q]- -के तै ५,४,१०,३[१]; मै ३,४,५; काठ २२,२.

**अ-निष्टर्क्य**[r]- -र्क्यम् काठ २४,५; क ३७,६.

**अ-निष्टृत**[s]- -तः ऋ ८,३३,९; मा २७,४; ७[t]; का २९,१,४; ७[t]; तै ४,१,७,२;३; मै २,१२,५[२]; काठ १८,१६[२]; क २९,४[२]; कौ २,१०४८†; शौ ७,८७,३[p]; †२०,५३,३; ५७,१३; पै ३,३३,७.

¶**अ-निष्ट्य-** -ष्ट्यः काठ ७,१३[३]; क ६,२[१].

¶**अनि(न्-इ)ष्ट्वा**[b] काठ १२,७[१]; ३५,१७; क ४८,१५.

?**अनिस्तृषामि** पै १७,१४,१.

**अ-निहत्य**[b,u] शौ १२,३,४४; पै १७,४०,४.

---

a) आनृह° इति पाठः? यनि. शोधः।

b) तस. नञ्-स्वरः। उप. यद्र.।

c) विप. (काष्ठा-)। बस. अन्तोदात्तः। उप. नि √विश् + अधिकरणे ल्युट् प्र.।

d) उप. कृते निशिता- टि. द्र.।

e) शोधः सस्थ. वरुणः टि. द्र.।

f) न. द्वि१ सद् वा. किवि. द्र.।

g) तु. टि. ?अ-निषित-।

h) सपा °ता (काश्रौ २,६,४१ शुअ १,९० च) <> °ताः (आश्रौ २,४,२ प्रमृ. च) इति पाभे.।

i) विप. (२अप्-)। बस. पूप. प्रकृतिस्वरम्। उप. यद्र.।

j) विप. (ऋभु-)। उप. निर् (<>स्) √शंस् + क्तः प्र.।

k) इह श्रूयमाणं रूपम् प्र३ (तु. सजोषसः सूरयः ऋ ४,३४,६ प्रमृ.; वैतु. GW. सं३ इति निःसारं द्र.)।

l) विप. (यज्यु-)। बस. अन्तोदात्तः। उप. नि √(स>)षञ्ज् + घञ् प्र. कुत्वं च।

m) विप. (तनू-)। तस. उप. तत्रसाधवीयः यत् प्र. नञ्-स्वरापवादोऽन्तोदात्तः (पा ४,४,९८;६,२,१५६)।

n) पाठः? वस्तुतः पूर्वमन्त्रस्य यः एषा इत्यु उत्तरार्धो भवति सोऽस्य मन्त्रस्य पूर्वार्धं स्यात्। अनिषेचनं चक्रुषी इत्यनेन शोधितपाठेन तृतीयेन पादेन च तस्य मन्त्रस्य गायत्र्या छन्दसा पूर्तिः स्यादिति विचारयन्तु सुधियः। एवं तावदिह तस. नञ्-पूर्वः। उप. <नि √(सि>)षिच् >नि-षेचन- इति यद्रः।

o) पाठः? अ-निशित- >-तम् इति शोधः (तु. सपा. तै ४,७,१५,४ संटि. च)।

p) सपा. °ष्कृतः <> °ष्टृतः इति पाभे.।

q) विशेवि.। बस. अन्तोदात्तः। उप. इष्टका-।

r) तस.। कृत्योकीयः स्वरः (पा ६,२,१६०) उप. निष्टर्क्य- यद्र.।

s) विप. (अग्नि-, इन्द्र-)। तस. नञ्-स्वरः। उप. <नि + √स्तृ 'हिंसायाम्' [तु. पपा. (मा., शंपा. [शौ ७,८७,३], W. GW., WAG. [१,२१], ORN. प्रमृ [तु. टि. नि √ष्टृ > नि-ष्टुर-]; वैतु. पपा. [ऋ.; शौ. च], अप्रा. २,८६ :नि-स्तृ° इति ?)]।

t) सपा. शौ ७,८९,१ अमर्त्यः इति पाभे.।

u) उप. <नि √हन्।

अनीक[a]- -कः पै ४, २४,७;-†कम् ऋ १, ११३, १९ ; ११५, १; १२१, ४; १२४,११; १६८,९; २,३५,११;३,३०,१३; ४,५,९; १५; ११, १; १२, २; ५, २, १; ४८, ४; ७६,१[b]; ६, ४७, २८; ५१, १; ७, १, ८; ९; ८८, २; ८, ९६, ९; १०, २, ६; ७, ३; ४३, ४; ४८, ३; ६९, ३; मा ७,४२; ८, २४$; १३,४६;२९,५४; का ८,१७,१; ९, २,२; ४, २$; १४, ४, ९; तै १, ४,४३, १; ४५, १$; २, ३,८,२;४,१४,४; ४,३,१३, १; ६, ६, ६; ६, २, ३, १¶[c]; मै १,३,३७,३९¶;२,१,१०¶; ३, १६, ३†; ४, १४, ४; काठ ४, ९;१३; २२, ५;६; ८; २९,३; ४६,१; क ३,७;११$; ३४, १; ४५, ४$; कौ २, ११०२; ३, ५,३; जै २,४, ६; शौ ४, २७, ७$[d]; ६, १२५, ३; ७, ३७, १$; १३, २,३४$; ३५; २०, १७, ४; १०७, १३; १४; पै ४, ३५, ७; १५,११, ७; १२, ४[e]; १६. १५१, ५; १८, २४, १; २; २५, ७; -का ऋ ३, १९, ४; ४,२३, ७; –कात् पै ८,१३,११‡[f]; –कानि मै २,१, १०¶; –के ऋ ४,५८,११[f]; ६, ४७, ५; ७, ४, ३; ८, ७४, ४[g]; १०२, १३; ९, ९७, २२; खि ५, ५, ८[b]; मा १७, ९९†; २०, ३६; का १९, १, १२†; २२,४,१; मै३,११,१; काठ ३८, ६; ४०, ७;१४; †कौ १, १३; ५३७; २,९२०; †जै १, २,३; ५५, ५; ४,३, ४;६, ५; –केन ऋ २, ९, ६; मा ५, ३४; का ५, ८, ५; तै १,३, ३,१; †४, ३, १३, २; ६, १, ५; मै १, २, १२; ¶१०,५[h]; १४ [h]; ३, ९, ५¶[i]; †४, १०, ५; ११, ४; काठ २,१३;२१, १३; ३५, २०[h];३६,८[h]; क २, ७; ४८, १८¶[h] ; –केषु ऋ ८, २०, १२; –†कैः ऋ [३, १, १५; ५४, १]; ४, १०, ३ ; ७, ८, ५; मा १५ ४६ ; का १६, ५, २८; तै ४,४,४,८; मै ४, १०, २;५;११, ४$; काठ २०, १४; कौ २, ११२९; पै ४, २७, ६. [°क- चतुर्°,ज्योतिस्°,तिग्म°, त्रि°,द्वि° पुरु°,बृहत्°,शत°,सु°].

¶अनीक-त्व[i]- -त्वाय मै १, १०, १४; काठ ३६,८.

अनीक-व(त्)- -वते मा २४, १६; २९,५९; का २६, ४, १; ३१, ७,१; तै १, ८,४, १¶; ५, ४, ५,४[?]¶; ५,२४,१; मै १, १०, १; २,१, १०¶; ३, १३, १४; काठ ९, ५;४८,३; क ८, ८¶; –वन्तम् खि ४,१४,१; –वान् तै ५,४,५,४[?]¶.

अनीक-शस् (:) शौ ५, २१, ८; ९ ; ६,१०३, ३ ; पै १९, १८, १०.

¶अनी(न्-ई)जान[i]- -नः मै १,४,६; ४,८,६; –नम् तै ६,६, ७, ३; –ने मै ४,८,६.

†अ-नीड(ळ)[j,k]- -ळः ऋ १०, ५५, ६; कौ २,११३३.

---

[a]) नाप. पुं. न. ( मुख-, गण-, ज्योतिस्-, रूप-, आयुध- प्रभृ.) । व्यु.? <✓अन्+ईकन् प्र (पाउ ४, १७)। नित्स्वरः (पा ६,१,१९७) । यद्वा तस. स्याद् नञ्-स्वरः (पा ६,२,२) । उप. च (नि>)नी+क-(<अक- <✓अच्, ञ्च् [तु. प्रतीक- प्रभृ.]) । अथवा, नापू. कल्पे नञोऽभावे सति नि इत्यस्य स्थाने अनु इति द्र. । तथा च सति समाननिष्पत्तेः अनूक- इत्यस्मात् प्राति. विवेचन-प्रयोजनः ऊ>ई इति वर्णपरिणामः । अथापि वा नापू. एव कल्पे नञभावे सति नि इत्यस्य स्थाने २*अन् (यद्र.) । माध्यमिक ईकार उपजनः (तु. सम्-ई-कु-) । अन्ततस्तदेव उप. ✓अक् ( दर्शने ) इत्येतेनाभिसंबद्धं स्यात् पूप. च सप्तमीप्रकारकम् ( २*अन्-> ) अनि इति रूपं सद् दीर्घी-भूतं स्यादित्यपीहाभियुक्तानामूहः द्र. (तु. WW· १, १२, ६, १६९) ।

[b]) सपा. अनीकम् <> अनीके इति पाभे. ।

[c]) सपा. मै ३,८,१ काठ २५, १ शुक्रम् इति पाभे. ।

[d]) =सपा. वैताश्रौ ९,२ । तै ४,७,१५,४ मै ३,१६,५ काठ २२,१५ आयुधम् इति पाभे. ।

[e]) सपा. शौ ९,४,८ ककुद् इति पाभे. ।

[f]) सपा. °कात् <> °के इति पाभे. ।

[g]) सपा. बृहन्, अनीके इत्यस्य स्थाने कौ १, ८९ जै १,९,९ बृहदनीकः इति पाभे. ।

[h]) सपा. तैब्रा १,६,२,७ मुखेन इति पाभे. ।

[i]) भावे त्वः प्र. तत्स्वरश्च ।

[j]) तस. नञ्-स्वरः । उप. यद्र. ।

[k]) =सुपर्ण- । यत्तु वें. सा. प्रभृ. उप. आश्रयपर्यायतया पश्यन्तः बस. अत्राहुः, तन्न । तथा सत्यन्तोदात्तापत्तेः

अनी(न्-ई)शान[a]- -नः तै ६,२,५,१; मै १,७,१.

अनी(न्-ई)श्वर[a]- -राः शौ १२, ३, ४२; पै १७,४०,२.

?अनीहतम् पै २०,३८,३.

अनु[b] ऋ १, ६, ४[c]; १०, १२[d]; १५, ५; २५, १६; ३३, ११[e]; ३७, ९; ३८, ११[f]; ४४, १०; ४६,१४[g]; ४९,३[h]; ५०,३[i]; ६[j]; ५७,२[k]; ७१,६; ८०,[१-१६][l]; ८[m]; ९; ८२,३[n]; ८४,[१०-१२]; ८८, ६; ९५, ३[o]; ११३, १३; १२०, ११[p]; १२१, ३; ७; १२६, ३; ५; १२८,१[r]; १३६, ५; १३८, ३[q]; १४१, ३[r]; ९[s];

(पा ६,२,१७२)। यथा त्वेतत् उप. सरूपादाश्रयपर्यायात् नाप. विविक्तं सत् सुपर्ण- [=आदित्य-] इत्यस्य विप. इति संभाव्येत। तस्मिन् उप. विप. सतीह तस. भवतु न बस. इति तु तत्त्वम्।

[a]) तस. नञ्-स्वरः। उप. यद्र.।

[b]) =२*अनु- इति रूपं प्रयोगतः द्वि१ क्रिवि. च सद् उभा नि. योगमुपेत्यैकत्वमिवापन्नमिति मतं भवति।

[c]) स्वधाम् इति द्वि. युक्तो लक्षणे कप्र. (पा १,४,९०)।

[d]) अत्र उ. म. (तु. मा ५, २९) यद् अनु-वृद्धयः इत्येकं पदमित्याहतुस्तत् स्वरदोषादुपेक्ष्यम्। अन्वये-ऽशक्त इव सन् स्क. पदपूरणतामाहेति संभाव्यते। इन्द्रमभिलक्ष्य तदनुगतास्तदुद्देश्यकाः सर्वा वृद्धयश्च सर्वा जुष्टयश्च भवन्तु इत्याकारकस्यान्वयस्य न केवलं संभवादपि त्वभीष्टत्वात् (तु. वें. सा. PW. प्रमृ.)। तथा ह्युत्तरस्यामृचि पुनरिन्द्रस्य स्तुतिभिरभिवर्धनं श्रूयते।

[e]) कप्र. इति वें. सा. GW. च; वैतु. MW. यत् √क्षर् इत्यनेन गतित्वेन योगम् वष्टि। तन्न। स्वधामनुलक्ष्य न तु तां कर्मतया विषयीकृत्य क्षरणस्य विवक्षितत्वात्।

[f]) रोधस्वतीः इति अनुलक्ष्येत्यर्थतः कप्र. (तु. वें. सा.; वैतु. GW. अनु···यात इति)।

[g]) उषस उपाचरणमकर्मकमाख्यातमभिप्रेतं द्र.। आश्विनश्रीरनुलक्षणस्य विषयो न त्वनूपाचरणस्येति विवेकाद् गतित्वदर्शी वें. चिन्त्यः (तु. सा.)।

[h]) लक्षणे वेत्थंभूतलक्षणे वा कप्र. (तु. स्क. वें. सा.)।

[i]) सा. एव केवलम् अनु···वि···अद्दश्रम् इत्याख्यातयोगमाह। तत्र चाऽऽख्यातिक य प्र. कर्तरि भ्रान्तद्दष्टत्वं बीजम्। रूपं चेदं कर्मणि न तु कर्तरीत्यस्य कृते तु. √दृश्। ऋ १०, ३०, १३ इत्यत्र स्वयमसौ भाष्यकारोऽपि द्र.।

[j]) उत्तरमन्त्रेण प्रकरणसामानाधिकरण्ये सति वरुणस्य पृथिव्यादिलोकत्रयंदर्शकत्वे तात्पर्यं द्र.। तत्रापि जनान् अनु इत्यतः पृथिवी संकेतिता (पृथिव्यामित्यर्थः)। √भुरण्य इत्यस्य चोभयथा वृत्तं भवति सकर्मकं च (तु. ऋ १, १५५, ५; ५, ७३, ६ प्रमृ.) अकर्मकं च (तु. ऋ ४, २७, ३; ८, ९, ६)। तदिहाकर्मकत्वं द्र.। यत्तु सा. PW. च अनु···पश्यसि इति योगमाहतुस्तन्न। उत्तरेण मन्त्रेण तात्पर्यसमन्वयदर्शनात्तद्विहाऽप्यनुपसृष्टस्य √पश् इत्यस्योपयुक्ततरत्वादित्यभिसन्धेः (तु. स्क. वें. GW. W.)।

[k]) स्वाअ. द्र. (तु. वें.; वैतु. सा. PW. GW. प्रमृ. अनु···असत इति)।

[l]) वैतु. या [१२,३४] अनु (उपास्ते) इति।

[m]) नाव्याः इति द्वि. युक्तः कप्र. (तु. स्क. वें. सा. GW.)। पामे. शौ ८,५,९; १०,१,१६ अति द्र.।

[n]) प्रत्यर्थे कप्र. (तु. स्क. वें. सा.); वैतु. PW. GW. उद्दिश्य प्रयाणेऽभिप्रायाद् अनुप्रयाणं यद् आहतुस्तन्न। तस्यानुगमनपर्यायत्वात्तस्य चेहाऽसंगतत्वात्।

[o]) दिशम् इति द्वि. युक्तः कप्र. (तु. स्क. वें.)। यत्तु सा. अनुष्ठु···अनु···विदधौ इत्यन्वयं वष्टि। न त्वसौ सुवचः। अनुष्ठु इत्यनेनैवाऽनोरनुक्रमाद्यर्थस्याऽऽगतत्वाद् व्यर्था पुनरुक्तिर्भवेदिति। समग्रश्च तदीय उत्तरार्धर्चीयोऽन्वयो व्यत्यस्तः। न हि ऋतून् प्रशासता सूर्येण पार्थिवानां पूर्वा दिग् अनुविधीयते। पूर्वां दिशमनु (=तस्यामित्यर्थः), प्रशासता तु तेनर्तवोऽनुष्ठु विधीयन्ते। इहैतावतैवाऽलं विस्तरः वैश. अनुसन्धेयः।

[p]) जनान् इत्यनेन च सोम-पेयम् इत्यनेन च पर्यायेणाभिसंबन्धुमनोरेकरयाऽध्याहारः (तु. स्क. सा.)।

[q]) नियुतम् इति द्वि. युक्तः कप्र. (तु. वें.)। यत्तु सा. अनुसृत्येति व्याचष्टे तदनुलक्ष्येत्यर्थे द्र.।

[r]) अनु···मथायति इतीवाभिप्रयन् सा. चिन्त्यः (तु. ऋ ३,४३,१;५०,२ प्रमृ. वें. GW. च)।

[s]) सीम् इत्यनेनान्वितः कप्र. भवति। यत्तु सा. इममन्वयं व्यभिचार्य्य अजायथाः इत्यस्य क्विप. विप. अव्य. (=गतिभिन्नत्वे सति तत्-सकक्षम्) इतीव संबन्धमभाषत, तच्चिन्त्यम्। गतिप्रकारके संबन्धेऽपि

१४८, ४; १६१, ३[a]; १६३, ८[४b]; १६४, २८[c]; १६५, ५[d]; १६६, १०[e]; १६७, १०;⌊१७५, ६[f]; १७६, ६⌋; १७६, २[g]; १८०, ८; १८१, ५; १८३, ३[h]; १८७, ४[i]; १९१, १५[j]; २, १, १५[k]; २, ⌊४; ९, ७०, ३⌋; ५[l]; ८; ८, ५[m]; ⌊११, १३;१४, १२⌋; २१, ३[n]; २४, १३[o]; २८, २ ; ३०, २; ३६, ६[p]; ३७, १; ३८, ३; ५[q];

सीम् इत्यस्य रूपस्य कर्माकाङ्क्षापूरकत्वेन दर्शनादिति यावत् । लक्षणार्थप्राधान्यात् कप्र. एव स्यादिति तु स्थितिः (तु. वें. GW.) ।

a) वः इति युक्तो लक्षणे कप्र. (वैतु. सा. पश्चादर्थे अव्य. इति भाषुकः) ।

b) त्वा इति द्वि. युक्तो लक्षणे कप्र. द्र. (तु. वें. सा. प्रभृ.) ।

c) अनु॰॰॰अमीमेत् इति गतियोगवादिनः पाश्चात्या भवन्ति। तत्र हि तेऽभिप्रेतमनुलक्षणात्मकमर्थमन्तर्भावयन्ति । तदयं वादश्चिन्त्यो भवत्यप्रामाणिकत्वादन्यथाप्रसिद्धेश्च । तथाहि । अनुगमनाऽनुशब्दनाऽनुभोजनादिप्रयोगेषु योऽनोरर्थो भवति तेनैव तत्सदृशेनैव वाऽर्थेनेहापि भाव्यम् । स चाऽऽनन्तर्यसादृश्यादिविशिष्टो नितरां लक्षणार्थविलक्षण इत्यभियुक्तानामतिरोहितमिव भवति । अतो यथाऽभिमतव्याख्यानं लक्षणोद्देशाद्यर्थः कप्र. एव प्रकाश्यताम् । सामर्थ्यात् प्रसिद्धेश्च (तु. वें.) । सा. च कप्र. अभिप्रयन्नप्यर्थस्य विषये न साधुवादी। तद्विस्तरस्तु वैश. द्र. ।

d) 'स्वधाम् अनुलक्ष्य (=तद्विषय इति यावत् ) त्वमिन्द्राऽस्माकं भवसि' इति तुरीयपादस्याऽर्थः पूर्वां पादत्रयीं प्रति हेतुतयोपन्यस्तः (तु. GW. ; वैतु. वें. सा. अनु॰॰॰ बभूथ इति योगमाहतुस्तद् विमृश्यम्)।

e) सा. स्वाअ., वें. अनन्वित इव च ; वैतु. PW. GW. प्रभृ. च। येषां वि-अनु॰॰॰धिरे इत्याख्यातयोगोऽभिमतो भवन् गतिर्गतौ (पा ८, १, ७०) इत्युक्तं पूर्वगतिनिघातमुपक्षिपेद् अथ श्रियः इति द्वि३ अनन्वितमिव कुर्यादिति नैवाद्रियेत।

f) निविदम् इति द्वि. युक्तः कप्र. (तु. वें. सा.; वैतु. सा. ⌊पक्षे⌋ अनु॰॰॰जोहवीमि इति मन्वानश्चिन्त्यः, निविदामनुहवनस्य हवनस्य वा श्रुत्याऽप्रसिद्धत्वाद् निविद्द्वारकस्य हवनस्य च प्रसिद्धत्वात् (तु. ऋ १,८९,३;९६,२;२, ३६, १६) ।

g) लक्षणे कप्र. (तु. वें. सा.) । यत्तु PW. GW. MW. कर्मणि प्रयोगमाहुः । तच्चिन्त्यम् । युम् इति कर्मपदस्य तथा सति संबन्धक्लिष्टत्वात् ।

h) GW. अनुः कप्र. इति । वें. सा. PW. च अनु॰॰॰वर्तते इति योगमाहुः । तथापि विमर्शसहं स्थलं द्र. ।

i) रजांसि इति द्वि. युक्तः कप्र. । गतित्वेऽपार्थो द्वैस्वर्यापत्तिरित्यसकृदवोचाम ।

j) संवतः इति द्वि. युक्तः कप्र. (तु. वें. सा. GW. ; वैतु. PW. MW. अनु॰॰॰प्रवावृते इति योगमाहतुः)। तथा सति प्राधान्येनाभिप्रेता लक्षणार्थो गौणो भवेत् । अनुपूर्वकगत्यर्थानामाख्यातानामर्थे लक्षणार्थोऽन्तर्भाविश्चाप्रसिद्धः ।

k) पूर्वेण भुवन् इत्याख्यातेन गतितया युयोजयिषुः वें. चिन्त्यः ।

l) चित्रमेतद् यत् सा. कर्मप्रवचनीयतयोपक्रम्य गतित्वे पर्यवसाययति । √चित् इत्यस्याऽकर्मकः प्रयोगः द्र. (तु. ऋ २,३४,२) ।

m) सा. इहाऽर्धजरतीयतीव । स्वराज्य-पदे कर्तरि प्र. चेद् भवेत्तर्हि का गतिः अनोः इति नासौ स्पष्टमाह । अनु॰॰॰वावृधुः इति योगश्चेदभिमतः स्यात्तर्हि णिजर्थान्तर्भावेऽपि सति न कोऽपि प्रसिद्धोऽन्वर्थान्वयः संभवेदिति दिक् ।

n) लक्षणे इति सा., आनन्तर्ये इति वें. । उभयथाऽपि कप्र. एव ।

o) वें. सा. पश्चादर्थे स्वाअ. इति (तु. सस्थ. टि. वशा- > -शः? ) । सा. ⌊पक्षे⌋ आनुगुण्येऽर्थे च्युतस्वरसंस्कार एव आदिस्वरं वशा- इति पदं गवार्थे पश्यन्नगतिकत्वादनोर्गतित्वविकल्पमाचष्ट ( तु. अनु वशान् इति प्रयोगः ⌊ऋ १,८२,३ प्रमृ.⌋) । विस्तरस्तु वैश. द्र. ।

p) पूर्व्यां निविदः इति द्वि. युक्तः लक्षणे कप्र. (तु. वें. ; वैतु. सा. √शंस् इतीममभ्याहरति गतित्वेन अनुं च तेन योजयति । श्रुतिस्वारस्यविरुद्धस्त्वयं योगो भवति)।

q) वें. अनु॰॰॰इषितम् इति केतमिति चोभयं भागुम् इत्यनेन समानाधिकरणमित्याह । अन्वादि वाक्यान्तरं तु द्र. । केतमनुलक्ष्य सवित्रेषितमित्यन्वयः ।

६[a]; ७[b]; ४२, २; ३,४,[७; ७, ८][c]; ७, ६[2d]; १२, ७[e]; १५, ३[f]; १७, १[g]; ५; २३, २; २६, ८[h]; ३३, ३[i]; ४; ३५, ८[j]; ४३, १[k]; ५१, १०[l]; ११; ५५, ४; ७,४,१[m];

a) लक्षणे कप्र.। सा. जायते इति पदमिति शेष इत्येवं सुग्रहं द्र.।

b) सप्तमीवचनः कप्र. (वैतु. PW. GW. अनु-आ… व्रम्व इति योजुकौ)।

c) व्रतम् इति द्वि. युक्तः लक्षणे कप्र. (तु. सा., वें. अनन्वित इव; वैतु. GW. अनु दीध्यानाः इति योजुकः)।

d) तृतीयार्थे कप्र.। स्वेन धाम्नेति मन्त्रांशस्वरसः (तु. GW.। एकतरत्र अनु… ववक्ष इति योगं यत् वें. सा. आहतुस्तच् चिन्त्यम् (तु. सस्थ. टि. परि √*वक्ष् [=√उक्ष् 'वृद्धौ']))। अन्यत्र च वें. अनु…अनयन्त इति, सा. च अनुघोषम् इति ब्रुवाणौ विमृश्यौ भवतः।

e) सपा. का ६,३,१ उप इति पाभे.।

f) वें. सा. अनु…विभाहि इत्याख्यातयोगमाहतुः। तत्कर्मतया च ज्वालाशब्दोऽध्याह्रियते पूर्वी-शब्दस्य च पुरुशब्दात् स्त्रियां रूपापत्तिरुच्यते। परमेतावतः क्लेशवतः पथः सरलतरः कप्र. मार्गः। 'पूर्वीः (कृष्णाः) अनु (अनुसृत्य तद्वद् इत्यर्थः) वर्तमानासु कृष्णासु त्वम् अग्ने…विभाहि' इति सुश्लिष्टोऽन्वयः।

g) प्रथमा धर्मा इति द्वि. युक्तः अनुः कप्र. इति वें.। अनु… समिध्यमानः इति गतित्ववादी वा पक्षे सप्तम्यर्थ-कर्मप्रवचनीयत्ववादी वा सा. उभयथाऽप्युपेक्ष्यः (तु. समानाभिप्रायाः श्रुतीः ऋ १, १६४, ४३;५०; १०,५६, ३;९०,१६ प्रमृ.)। अथेह प्रथमे कल्प आदिस्वरं धर्म-शब्दम् अग्निविशेषणतया कर्त्तरि व्याचक्षाणः सा. नितरां च्युतसंस्कारः। सपा. तैब्रा१,२,१,१० आपश्रौ ५,६,३ नु इति पाभे.।

h) वें. सा. PW. GW. MW. अनुप्रजानन् इति द्व्युदात्तमेकपदमाहुः। मति- शब्दश्चाऽक्लबरूपो ज्योतिः इत्यस्य समानाधिकरणतया व्याख्यायते। वस्तुतस्तु मतिम् अनु इति तृ. अर्थे कप्र. द्र. (तु. हृदा मनीषा मनसाऽभिक्लृप्तः [कउ ६,९])।

i) योनिम् इति सप्तम्यर्थे कप्र. (तु. वें. सा.; वैतु. GW. अनुसंचरन्तो इति द्व्युपसर्गयोगं ब्रुवाणः स्वर-द्वयीं प्रति चोद्यो भवति)।

j) वें. अनु…आगत्य इति सा. च अनु… प्रजानन् इति योगावाहतुः। समानश्रुतिस्वारस्यं तु कप्र. इव द्रढयेत् (तु. ऋ ३,१२,७;७,७,१ प्रमृ.)।

k) सोम-पेयम् इत्यनेन संबन्धाल्लक्षणे कप्र. (तु. ऋ १, १४१, ३; ३, ५०, २; ७, ९०, ४; १०, ३७, ३)।

l) लक्षणे कप्र.। इदमाऽस्याऽन्वयः। नापू, मन्त्रे कृतां प्रार्थनामुद्दिश्येत्यर्थः (वैतु. सा. य इहाऽसंगत-मिवाऽनुक्रमाऽर्थमाह)। यत्तु वें. एतदन्वयार्थं त्वाम् इति पदमिन्द्रपरमाचिक्षिप्सति तदप्ययुक्तम्। तथा हि सतीदमः सुतम् इतिपदेन विशेषणत्वेन संबन्धे सिद्धे उत्तरार्धे अस्य इत्यस्य पदस्याऽन्वादेशीयेन सर्व-निघातेन भाव्यम् (पा २, ४, ३२)। ननु त्वदभीष्टे-ऽन्वयेऽपि समानं चोद्यमन्वादेशसामान्यादिति चेद्। नेति ब्रूमः। सुतम् इत्यत्र क्तस्य भावेऽभिप्रायात् पूर्वार्धेन च प्रथमस्य वाक्यस्य परिसमाप्तिदर्शनाद् (वैतु. सा.) उत्तरार्धीयनेदमा सुतस्य सतः सोमस्य प्रथमत एव उपस्थापनाद् अन्वादेशविषयाभावाद् ऊडिदम्- (पा ६, १, १७१) इति स्वरस्य चारि-तार्थ्यादिति।

m) प्रथमे कल्पे प्रसिति-शब्दं सेनापर्यायीकुर्वन् सा. अनु…द्रूणानः इति योगमाह (तु. वें. GW.)। आस्तां तावत् तच्चिन्ता तस्य नितान्तं निर्मूलत्वात्। प्रसितेरुक्तोऽर्थो व्युत्पत्तिमात्रावष्टम्भः प्रवृत्तिप्रामाण्यशून्यः। गत्यर्थो √द्रू (स्वा.) √द्रू (क्या.) इत्यस्माद् विविक्त इत्यलं विस्तरान्तरेण। द्वितीये च कल्पे अनोः कोऽर्थो भाष्य-कृतोऽभिमत इत्येव न स्पष्टमुक्तं भवति। यदि नाम तृतीयार्थः कर्मप्रवचनीययोग इत्युच्येत तर्हि तृष्वीम् इति तृतीयार्थे द्वितीयेति तद्वचांस्यपार्थान्यापद्येरन्। उक्तयोगत एव तत्सिद्धेः। न चापीह निरुक्तप्रामा-ण्यात् (या ६,१२ द्र.) तृतीयार्थे अनुः अभिसंमतस्तस्येति वक्तुं पार्येत। तदुद्धृते निरुक्तांऽशे तृतीयारूपयोर्मध्ये अनोः पाठोपलम्भात्। यदि हि नाम द्वितीयायास्तृतीया-त्वेन परिणतिः अनुना कारिता निरुक्तकारस्या-ऽभिप्रेताऽभविष्यत् तदोक्तप्रकारेणोक्तपरिणामकारितया परिसमाप्तशक्तित्वात् अनोः पुनः पाठमसौ नाभ्यरोचि-ष्यतेत्यभिसन्धिः।

८; ९; १६, १८[a]; ४०, २[b]; २२, ७[c]; २९, | ३[d]; ४०, ४[e]; ५२, ६; ५, २९, २[f]; ३२, १०[g]; | ३३, २[h]; ४४, १[h,i]; ३; ५२, ६[j]; ५३, ६[k];

[a]) लक्षणे कप्र. (तु. सा. ⌊यस्त्वसौ भाव निष्पन्नं प्रमति- इत्येतत् स्त्री. प्राति. लक्षणया तद्वद्वृत्तित्वोपचारेण पुंसा सामानाधिकरण्यं भजत् सद् बस. भवतीति कृत्वा स्वत एव पुं. भावयति, तद् यथा दाशतय्या वाचोयुक्त्या विरुध्येत तथा यद्र.⌋; वैतु. वें. GW. च लक्षणार्थमलक्षयन्तौ अनु···आजगन्म इति द्व्युपसृष्टाऽऽख्याताऽऽख्यायिनौ)।

[b]) यज्ञम् इति द्वि. युक्तः कप्र.।

[c]) सीम् (=पूर्वार्धश्राव्यमाणाः स्वसॄः) अनुलक्ष्यति संबन्धः (तु. वें. सा. च)। यश्चेहाऽपरः अनुः श्रूयते तदर्थं अनु√बन्ध्>अनु···बद्बधान- इति द्र. (वैतु. सा. यः बद्बधानाः इति पदं सीम् इत्येतत्-समानं प्रकृतेन कप्र. अनुनाऽन्वितमिच्छति)। एवं यश्चेह प्रः श्रूयतेऽसौ गतितया √स्यन्द् >स्यन्दयुध्यै इत्यत्रान्वितः द्र. (वैतु. सा. यो द्वितीयमुक्तपूर्वम् अनुं स्यन्दयुध्यै इत्यनेन प्रं च मुचः इत्यनेन गतितया योजयितुमिच्छन् प्रमुचः इत्येकस्मिन् पदे द्वैस्वरी कथं, तिङि चोदात्तवति गतिनिघाताभावश्च कथमिति चोद्यं नैव पश्यति। नापू. मन्त्रे च समानप्रकरणके प्र√सृ इत्यस्य प्र√क्रम् इत्यस्य च ये श्रुती भवतस्ते च नितरामित्रोपेक्षते)। यत्तु PW. GW. प्रभृ. अनुप्रमुचः इति द्विगतिकं त्रिस्वरमश्रुतपूर्वं क्विप. श्रावयेयुस्तदतीव निस्सारं द्र.। निपातद्वयप्राकरणिकसंबन्धाऽविभावनदुर्विपाकमात्रत्वात् स्वरसंचारसौक्ष्मीं प्रत्य् अक्षम्यसाहसमात्रत्वाच्चेति दिक्।

[d]) दिशम् इति द्वि. युक्तः कप्र. (तु. सा.; वैतु. वें. अनु···श्रावय इत्याह तच्चिन्त्यम्)।

[e]) कप्र.। ईम् इत्यनेन सना. वा यदित्येनच्छिरस्केन पूर्वार्धमितेन वाक्येन वाऽन्वयः। प्रथमे कल्पे ईम् इत्यनेन नापू. मन्त्रे श्रावितचरोऽर्चनप्रकारः परामृश्यमानः द्र.। उत्तरे तु ईम्···इन्द्रम् इति समानाधिकरणः संबन्धः। प्रथमे कल्पे लक्षणार्थं उत्तरे द्र. पश्चादर्थे अनुः इत्यपरो विवेकोऽपि द्र. (तु. ⌊उत्तरे कल्पे⌋ वें.; वैतु. सा. PW. प्रभृ. अनु···आर्चन् इत्येवं योजुकाः)।

[f]) पादादौ युद् इत्याक्षिप्य पश्चादर्थे वा लक्षणे वा तदभिसंबद्धः कप्र. (वैतु. सा. सर्वथोत्तममिव क्षितयः इत्यस्य विप. इतीव भाषमाणः, PW. प्रभृ. च अनु··· नमन्त इत्यनपेक्षिताऽन्वयोपमर्दिमाख्यातिकं योगं ब्रुवाणाः)।

[g]) याः (धियः) अनु इत्था जोषं वक्षः इत्येवमन्वयः (वैतु. वें. जोषम इत्यन्वितः प्रत्यर्थे कप्र. मन्वानश्चिन्त्यः। सा. अनु···वक्षः इति योगोऽस्पष्टान्वितार्थः)।

[h]) लक्षणे कप्र.। सामान्येन द्वितीयायां प्राप्तायामिह यासु इति सप्तमी द्र. (वैतु. वें. GW. अनु···वर्धसे इति योगं मन्वाते तौ चात्र प्रत्याख्येयौ द्र.)।

[i]) पाभे. काठ ४,३ अधि द्र.।

[j]) एनान्···विद्युतो मरुतो···अनु···अह अनुगच्छन्त्येव इति सा. √गम् इतीममभ्याहरन् अनोर्गतित्वं प्रतिपिपादयिषति। न चासौ यत्नस्तदीयः शोभनः। लक्षणार्थे कप्र. सुवचत्वे नैनेन च विद्युन्मरुत्सान्निध्यात्मकस्य श्रुत्यर्थस्वारस्यस्य सुवेदेऽध्याहारस्य तदुपाश्रयस्य गतित्वकल्पनस्य वा सुतरामजागलस्तनायमानत्वं न व्यभिचरेत्। यच्च वें. सा. एनान्··· मरुतः इत्यन्वादेशस्य चाऽन्वादिष्टस्य चोभयोः सपदि योगमेकस्मिन्नेव वाक्येऽन्वयं च बभाषाते तदपि तयोरसदृशमिवापतेत्। अन्वादेशस्याऽन्वादिष्टस्थानित्वेनैव सावकाशत्वादित्यस्य निगदसिद्धत्वात्। न चैहवोपरिष्टाद् दिवः इति षष्ठी न च तत्संगत्यर्थं 'मरुद्गणस्य' इत्यश्रौतोऽध्याहारोऽपेक्ष्यत इत्यादिविस्तरस्त्वस्मदीये वैश. द्र.। उक्तादेव न्यायाद् अन्वादिष्टाऽन्वादेशविषयकाद् उत्तरार्धमात्रव्यापकैकवाक्यकल्पनामुपाश्रित्य प्रवर्तमानयोः GW. MW. अनु···अर्त इति योगोऽपि सुत्यजः स्यादिति न बहु वक्तव्यमिवास्ति।

[k]) अनु···यन्ति इति योगं भाषमाणः PW. उपेक्ष्यः (वैतु. GW.)। तथा सति रोदसी इत्यस्याऽन्वयस्य स्वारसिकस्य दुर्लभत्वप्रसङ्गात्। यनि. तु पर्जन्यविसर्जनानन्तरं मरुतामुभयलोकसंसर्जुकेनेव सतेन्द्रधनुषा द्यावापृथिव्योर्मध्ये गतिः सुवचेति तदुपपत्तिः। यदपि सा. पर्जन्यविमोचनस्य द्यावापृथिवीविषयत्वमनुमन्येत तदपि चिन्त्यम्। दिवः पूर्वार्धे पर्जन्यकोशच्यावनाऽपादनत्वेन श्रावितत्वे सति तस्याः सपदि पर्जन्य-

१०[a]; ५९, १[b]; ६१, १९[c]; ७३, । ४[d]; ७८, २[e]; ८१, २[f,g]; । ३[f]; ८६, ५; ६, १५, ९;

विमुक्तजलाधारत्वस्य दुर्घटत्वाच्चायुक्तत्वाच्चेति दिक्। अपि च अनु'''वि'''सृजन्ति इत्यवं योगमातिष्ठमानः MW. चिन्त्यः। '''यन्ति इत्यनेन च वि'''सृजन्ति इत्यनेन चैकस्यैव अनोर्युगपद्योगमुशन् PW. विमृश्यः।

[a]) पूर्वार्धगते शुर्धम् इति गणम् इति च पदे अनुलक्ष्यत्वेनानेन कप्र. सताऽन्विते भवतः (तु. वें.)। सकलमन्त्रमयेऽत्रैकस्मिन् वाक्ये सति यत् सा. पूर्वार्धोत्तरार्धभेदेन वाक्यभेदं चकार। तन्मन्दम्। तदीययोजनाद्वयेऽपि अनुप्रयन्ति इत्येकपदे द्वैस्वर्यप्रसङ्गादिति दिग् (अस्मदीययोजनायां तु. ऋ ५, ५३, ५)। PW. प्रभृ. गतित्वं मन्वानास्तथैवोपेक्ष्याः।

[b]) इह श्रथयन्ते इत्यकर्मकमाख्यानम् (तु. टि. अनु √श्रथ्, श्रन्थ्>°शिश्रथः; वैतु. GW. य इहाप्युपसृष्टमाख्यातमाह, वें. सा. च यौ उपसृष्टिं च समर्थयतः √श्रथ्=√श्लिष् इति धात्वन्तरसाम्यं च [तु. सा. ऋ ४,३२,२२ अपि])। एवं तावत् स्वं भानुमनु इत्येत्रं यनि. कप्र. एव द्र. (तु. स्क.)।

[c]) लक्षणे कप्र. (तु. वें. स्क. सा. GW.)। गतिरेव वा स्यात्। तदा गोमतीः'''अनु'''क्षेति इति सकर्मकतयाऽन्वयो वक्तव्यः। प्रायेण तु √क्षि (निवासे) इत्यस्याऽकर्मकतयैव श्रुतयो भवन्ति। क्वाचित्कमेव सकर्मकमपि श्रवणं भवति (तु. ऋ ५,३७,४)।

[d]) वाम् इत्येतेनाऽन्वितः पश्चादर्थे कप्र. द्र. (तु. GW.; वैतु. वें. सा. PW. यदनु अनुष्टवे इति समस्तमाख्यातं भवति न्याय्येतरद्वैस्वर्यं च प्रसज्यते)। यथा च स्तुव->-वे इति स१ स्यान्न चाऽऽख्यातमिति।

[e]) लक्षणे कप्र. द्र.।

[f]) पाश्चात्यास्तु प्रथमे मन्त्रे अनु'''विराजति इत्याख्यातं द्वितीये मन्त्रे च अनु'''ययुः इत्याख्यातं पश्यन्ति। तदेतत्तदीयं दर्शनमदर्शनमिव भवति (तु. सा., वें. [२ये मन्त्रे])। उभयत्र लक्षणादिकर्मप्रवचनीयार्थविशेषोपपत्तेः। तथाहि। उषःकर्तृकया प्रयाणक्रियया सवितृकर्तृकाया विराजनक्रियाया लक्ष्यलक्षणसंबन्धो वा पौर्वापर्यसंबन्धो वा मन्त्रस्वारस्यानुरोधेन काममुपपद्येत। स एव च कर्मप्रवचनीयार्थ इत्यभिप्रायः। गतित्वे प्रयाणविराजनक्रिययोरभिधेयार्थस्वरूपसामान्ये सत्येव तयोः क्रिययोर्गतिद्वारा पौर्वापर्यसंबन्धो भवेन्नाम वाच्यः। न तु 'पत्युर्मरणमनु म्रियते पत्नी' इतीह प्रयुक्तमरणद्वयवत् प्रयाणविराजनक्रिययोः काऽप्यभिधेयार्थस्वरूपसमता संभवति येन प्रयाणाऽपेक्षया विराजनस्याऽऽनन्तर्यद्योतकत्वेन अनोः गतित्वमुपपद्यताम्। समानवाच्यार्थस्वरूपतायामानन्तर्यसाहचर्यसजातीयोऽनोरर्थो गतित्वद्योत्यो भवति विभिन्नवाच्यार्थकक्रियाप्रयोगे चाऽसावेवार्थः कर्मप्रवचनीयत्वं प्रयोजयतीत्याकारको विवेक इहाभिप्रेतो भवति। अथोत्तरस्यामृच्ययमपरो विवेकविषयोऽवधेयः। तद्यथेह सवितृकर्तृकदेवान्तरकर्तृकयोः प्रयातियातिक्रिययोरभिधेयस्वरूपं प्रति भेदाभावो भवति, तथा पूर्वोक्तदिशा तदीयाऽऽनन्तर्याद्यर्थो गतिगोचरीक्रियेतेत्येवं प्रत्यवस्थीयमाने उच्यतेऽयमपि नैव गतिविषय इति। कर्मान्तरसद्भावात्। को भावः। उच्यते। यत्र कर्तृविशेषकर्तृकक्रियामपेक्ष्य कर्त्रन्तरकर्तृकायास्तज्जातीयाया अपरायाः क्रियाया आनन्तर्याद्यर्थो गतिद्योत्यो भवति तत्र पूर्वा क्रिया कृद्वृत्तिं वाऽऽपाद्यते कर्तरि वाऽन्तर्भाव्यते। सा चैवं कृद्वृत्तिमापाद्यमाना वा क्रिया तदन्तर्भावविशिष्टो वाऽसौ कर्ताऽनूपसृष्टाया उत्तरस्याः क्रियायाः कर्मतया निर्दिश्यते। तद्वति वाक्ये कर्मान्तरं च न संभवति। यथा 'रामो गच्छति' इति रामकर्तृकैका क्रिया 'लक्ष्मणो गच्छति' इति लक्ष्मणकर्तृकाऽपरा क्रिया। तयोः परस्परासंबन्धावच्छेदो द्विविधः संभवति। 'रामस्य गमनमनुगच्छति रामं वाऽनुगच्छति लक्ष्मणः' इति। न तु रामस्य वनगमनमनु लक्ष्मणः कीर्त्तिं जगाम' इत्यत्र गतित्वं संभवति। उभयोः क्रिययोर्गत्यर्थसामान्येऽपि द्वितीयस्य कर्तुरीप्सिततमत्वेनाऽपरस्य कर्मणः प्रदानात्तदपेक्षया प्रथमकर्तुर्वा कृद्वृत्तिमापन्नायास्तत्कर्तृकायाः क्रियाया वा द्वितीयकर्तुरीप्सिततमत्वाभावेऽनुगतिविषयत्वाभावात्। अनुना कर्मप्रवचनीयेन तयोर्मध्ये वर्तमान आनन्तर्यसंबन्धस्तु द्योत्यत एव। तद्वदिहाऽपि (ऋ ५, ८१, ३) सवितृकर्तृकप्रयाणक्रियां कृद्वृत्तिमापन्नाम् अनु (अनुलक्ष्याऽनुसृत्य वा) अन्ये देवाः स्वीयमीप्सितमकर्मभूतं महिमानं ययुर्नत्वनुययुरिति विवेकः कर्त्तव्यः।

[g]) अनु प्रयाणम्>सपा. शौ ७,७७,६ अनुप्रयाणम् इति पाभे.।

१७, १२[a]; २३, ८; २८, ४[b]; ३६, २[c]; ४६, १४[d]; ५४, ६[e]; ६३, ६[f]; ७; ६४, ५; ६७, ६; ७५, ६[g]; ७, ७, २[h]; १८, १२[i]; २५[j]; ३१, ९[k]; ७०,

[a]) 'तासां नदीनां संबन्धिनः पुन्थाः पथो मार्गान् प्रवतः प्रवणान् अन्वकार्षीः' इति शेष इत्येवम् अनु इत्युपसर्गयोग्यक्रियाध्याहारं च तत्प्रकारकमन्वयं च तद्-भाष्यं च सा. अनुमेने । अत्र प्रत्येकस्मिन् पदे क्षोदक्षमे सत्यपि न विस्तारणार्थ इति संकेतमात्रमुच्यते । प्रवतः इति शसि रूपस्य नीचीः इत्यस्य च अपसः इत्यस्य च समानाधिकरणभूतस्य तद्वद् अपाम् विशेषणत्वेन सहजेन चारितार्थ्यमुपागतस्य पुन्थाम् इति अमि रूपेणैकवचनेन विगतिगतीयमानं वचनव्यत्ययमुपाश्रित्य सामानाधिकरण्येन योजयितु मनीषाऽनीशा तदीयैत्यवंधयम् । प्रवतः इत्यस्योक्तात् स्त्रियां शसि सामर्थ्यात् (तु. ऋ ७, ३२, २७ प्रभृ.) । अन उक्तो वचनव्यत्ययप्रस्तावो निरर्थकः । एवं च अनोः कर्मप्रवचनीयतया पुन्थाम् इत्यनेनाऽन्वय ऋजूयत्युत्तरार्धमात्रव्यापकमेकमेव वाक्यं च भवेदिति ।

[b]) उरुगायम् अभयम् अनु'''विचरन्ति इत्याकारिका योजना GW. MW. प्रभृतीनां पाश्चात्यानामभिमता भवति । तत्र विमर्शो भवति । किमिह तासां गवामभयविशिष्टलोकविशेषं प्रति संक्रमणं शिश्रावयिषितं भवत्युताहो तासामिहैवाऽभयेन विचरणमिति । सूक्तगानि लिङ्गानि तावद् द्वितीयमेव विकल्पं द्रढयन्ति । ओपक्रमादोपसंहाराद् हि समग्रं सूक्तमेतद् गवामाप्यायनं सुखविशेषाधाने पालने पोषणे च सुपठं भवति । अतः कप्र. उरुगायेनाभयेन इति तृतीयार्थे योगः । अभयस्य सिद्धवच्छ्रावितत्वान् नाऽयं साध्याभिप्रायोद्देशादिलक्षणपदार्थवचन इति विवेकश्च सुकरः । तदकुर्वन् सा. तु चिन्त्यः ।

[c]) अनुप्रयेज इति योगं स्क. वें. सा. GW. चाहुः । तदनभिमतं भवति । यत ऐन्द्रस्यौजसो लक्ष्यत्वेन समर्पयितुमिष्टत्वात्तदर्थीयः अनुः कप्र. एव स्यात् । अन्यथा द्वैस्वर्यमप्यनुपपन्नं भवतीत्यपरं चोद्यं स्यात् । स्क. [पक्षे] पश्चादर्थे अव्य. इत्यपि नेष्टम् ।

[d]) अनुः सहार्थे कप्र. (पा १,४,८५) ।

[e]) लक्षणार्थः कप्र. । यत्र यत्र यथा यथा च गावः प्रायुस्तत्र तत्र तथा तथा च प्रेहीत्यर्थः (एवं नाम ताः संरक्षन् संस् ताभिः सह गत्वा तासां प्रत्यायनसमयेऽरिष्टाभिस्ताभिः प्रत्यागन्तुमर्हेरित्यभिसन्धेः [तु. नाउ. मन्त्रः]) । एस्थि. अपलक्षणामपि सतीं द्वैस्वरीमनुमन्वानाः अनुप्र'''इहि इति योगं च ब्रुवाणाः PW. प्रभृ. उपेक्ष्याः ।

[f]) अनु-प्र √पत (गतौ) इतीवेह कल्पयन्तः सा. प्रभृ. नाद्रियेरन् । लक्ष्यमात्रभूतयोरश्विनोः प्रपतनक्रियया कर्तृत्वसंबन्धाभावे सति कस्यचिदपि तदनुप्रपतनकर्तृत्वेन वक्तुमनुपलभ्यमानत्वात् लक्षणार्थः कप्र. पृथगन्वयः स्यादित्यभिसन्धेः ।

[g]) पूर्वार्धे यथाऽभिलषिते पुरोनयने श्राविते सत्युत्तरार्धे इह तत्प्रत्यनीकतया मनोऽनुसारि पश्चाद् यमनं श्रावितं द्र. । एवं सति अनोः कप्र. मनः इत्येतेन कर्मपदेन पश्चाद् इत्यस्य क्रिवि. च यच्छन्ति इत्येतेन संबन्धः ; वैतु. या ९,१६ यदन्विव सा. पश्चात् इत्येतत् पदं रश्मयः इत्येतेन योजयन्नपि मनोऽनुकूलमित्युक्त्याऽनोरिवार्थं परिसमापयन्नपि तदीयं पुनः प्रसवमिवेच्छन् अनुयच्छन्ति इत्यपि भाषते, GW. च यः अनुयच्छन्ति इति योगं समर्थयन् पश्चात् इत्येतद् अनोः अर्थे कप्र. इतीवाऽभिसंदध्यात् ।

[h]) तृतीयार्थे कप्र. इति सा. साध्वाह (तु. वें.) । अनु'''आयाहि इत्येवं योगं पश्यन् GW. चिन्त्यः स्यात् ।

[i]) सादृश्यार्थे कप्र. (बृबुम् अनु इति संबन्धः) । प्रथमे पादे श्रूयमाणे श्रुत- इति बृबु- इति च कवष- इत्यस्य विप. असती व्यप. भवत इति कृत्वा वें. सा. आनुपूर्व्ये अव्य. इत्यातिष्ठेते । PW. GW. प्रभृ. च बृबु-कवषयोः सामानाधिकरण्यमिव पश्यन्तः अनु नि वृणक् इत्येतद्व्यवहितं क्रिप. गतीकृत्याऽनुप्रवेशयन्ति । तदेतत् सर्वं सार्थविमर्शं द्र. ।

[j]) पाठः (तु. पपा. प्रभृ. ग. इति) ? *अनु- [(<√२*अन् [= √अन्न्, अन्द् 'बन्धने']) विप. (*बन्धु- [पैजवन-सुदास्-])] > अनुम् इति शोधः । शेषं वृधम् ऋ १,१६७, ४ टि. द्र. ।

[k]) कृष्टिकर्तृकसंनमनस्य सोमकर्तृकोर्ध्वीभावस्य च समानं देवताराधनमुद्दिश्य कृतत्वेन श्रावण एव मन्त्रस्वरसः (तु. वें. सा. ; वैतु. GW. अनु भुवन् इति योगमुशन चिन्त्यः) ।

४[a]; ७७, ३; ८७, ७[b]; ८, १, १४[c]; २, ३३[d]; ४, ८[e]; १०; २०[f]; ६, ३८[2g]; ९, २; १०, ६; ११, ८; ४३, २१[i]; १७, ५[h]; १९, ३५; २०, ७; २१, १८; ३२, १९[1]; 

[a]) अनु…चख्यथुः इति संबन्धं वें. सा. प्रभृ. उश्युः । उपसृष्टधातुवाच्यभूतस्याऽन्वेषणविशिष्टदर्शनार्थस्य प्रसङ्गाऽभावात् कप्र. सतः अनोः सदृशार्थस्य च प्रासङ्गिकत्वान्न तथेति दिक् (तु. ऋ ९, ९७, ५)। यथा च √ख्या इत्यस्योपसृष्टस्यानुपसृष्टस्य च सतोऽकर्मकमपि वृत्तं भवति (तु. मा ११,१७[1] इत्यत्रत्यं टि.)।

[b]) गतिरिति वें. सा. PW. प्रभृ. च । तथा च सति व्रतानि इत्येतत् सकर्मकत्वेनाऽभीष्टस्याऽन्तर्भावितण्यर्थस्य अनु-ऋधत्-> -धन्तः इति शत्रन्तस्य कर्मतया योजयितुमिष्यते। यथा चेदमाख्यातं न सकर्मकं न चाऽन्तर्भावितण्यर्थं भवितुमर्हत् तथा बाहूवृच्य एवास्याऽपराः श्रुतयो विस्पष्टं दर्शयन्ति (तु. ऋ ६, २, ४; ३, २;८,४६,२३ यत्र ऋधद्-वार- वीत्-वार- शब्दयोश्च विवेकोऽप्युक्तमेवार्थं द्रढयति)। एस्थि. मध्यमयोः पादयोर्हेतुहेतुमद्भावः द्र.।

[c]) 'अमन्महि (हि, इ) त् (यथा वयं) शूर ! ते महता राधसा स्तोमम् अनु सकृत् सु मुदीमहि' इत्येवमन्वयः स्वरतः। अनुः अत्र तृतीयार्थे कप्र. भवति। स्तोतॄणां स्तोमसहकृतानामैन्द्रेण महता राधसा निमित्तभूतेन वा साधनभूतेन वा (सिध्यमानस्य) मोदातिशयस्याऽन्तर्विच्छिन्नपर्यायराहित्याऽऽत्मकसकृद्भावविशिष्टस्याऽनुभवस्य प्रार्थ्यमानत्वेन समर्पणे तात्पर्यवती भगवती श्रुतिः द्र. (वैतु. वें. सा. प्रभृ. यैः पूर्वार्धेन वाक्यमेकं परिसमाप्योत्तरार्धेन तदसंबद्धमिव वाक्यान्तरं कर्तुं कृतोत्साहैः सद्भिर्बलात्कारेणेव अनु… मुदीमहि इति योगमुरीकुर्वाणैः अनु√मुद् = अनु √ब्रू इतीव बाभाष्यते)। उक्तपूर्वेऽस्मदीयेऽन्वये सु इति अव्य. क्रिवि. मुदीमहि इत्यनेन क्रिप. संगच्छेतेति दिक्।

[d]) 'मघं हविर्लक्षणं धनं तद्वतो यजमानान् अनुमन्यनुमोदको भवति' इति प्रथमे कल्पे सा. गतित्वमाह। अत्र तावत् शसन्तस्य मघोनः इत्यस्य अनु…मन्दी इत्येवं कृताऽन्वयो दुर्घटश्चिन्त्यः। न च स्यान्नाम मघोनः इति षष्ठी किमतो नश्छिद्यत इति वाच्यम्। अनुपसृष्टस्य मन्दी इति शब्दस्य बाहूवृचे प्रसिद्धत्वात् (तु. ९, ५८, १ प्रभृ.)। उत्तरस्यामृचि वाजदावा मघोनाम् इत्युपस्थिताच्छ्रौतात्लिङ्गादिहापि बहुत्वविशिष्टमघवद्विषयताऽनुमानाच्च। मध्यमे कल्पे तावदसौ मन्दी स्तुत्यः इति नितान्तमसमर्थमर्थमिच्छन् वाक्यपूर्त्तावशक्तः 'तान् अनुगृह्णातीति शेषः' इत्यनपेक्षिताऽध्याहारमुपाश्रयति। ततोऽपि सन्तोषमनाप्नुवन्निव चरमे कल्पे 'यस्य मघोनः धनवतः इन्द्रस्य मन्दी स्तोता (अनु) अनुकूलो भवति' इत्युत्तन्त्रमसंबद्धमनोरनुकूलार्थे प्रयोगं वाञ्छति। तेनाप्यथ प्रस्तुतमन्त्रावधिकामर्थपरिसमाप्तिमपश्यंश्च एष एतानि इत्युत्तरत्रैकवाक्यतामाह।

[e]) तु. सा. यः ऋ ३,३२,११ इति श्रुत्यन्तरसंवादनेन तृतीयार्थतामस्य कप्र. सतः प्रतिपेदे (तु. वें.; वैतु. GW. अनु…वावसे इति योजुकः)।

[f]) लक्षणे कप्र.। यत्तु सा. पश्चादर्थतामस्य पश्यन् यूथानि इत्यनेन कर्मणाऽस्य संबन्धं मन्वानश्च निर्…अजे इति क्रिप. अकर्मकमाह, तन्न (तु. निर्√अज्)।

[g]) इह पभा. वर्ति? वर्ति इति शोधः द्र. (इन्द्रमनुलक्ष्य द्यावापृथिव्यौ वर्तनशीले भवत इन्दवश्च वर्तनशीला भवन्ति यथाऽश्वमनुलक्ष्य तदनुसारितया चक्रं वर्तनशीलं भवत्येवं मन्त्रान्वयस्य सुश्लिष्टत्वात्)। एस्थि. √वृत् >वर्ति इत्यस्य वा लुप्तप्रत्ययतकारं वें. GW. प्रपु१ (वर्ति इति) त्-र्ति>र्ति इति यदन्ये प्रतिपद्यन्ते (तु. वें. सा. GW.)। तदसंगतम्। निदर्शनवाक्ये तिङन्तापेक्षया कृदन्तस्य सतश्चक्रस्य विप. नेदीय इवाऽऽकाङ्क्षितत्वादित्यभिसन्धिः। एवं च तावदत्र मन्त्रे अनुः द्विः श्रूयमाणतया सकृच्चाऽऽक्षिप्यमाणतया कप्र. द्र.।

[h]) सकलगात्राऽनुलक्षणस्य प्राधान्येन समर्पणे श्रुतिस्वारस्यप्रतीतेस्तत्र च लक्षणे कप्र. एव द्र. (तु. टि. शौ २०,४,२; वैतु. वें. सा. GW. अनु…विधावतु इति योजुकाः)।

[i]) स्वधाः आहुवः चानुलक्ष्य यत्रैव तास्तत्रैवेत्यर्थे कप्र.। यत्तु सा. द्वितीयम् अनुं पूरणमाह। तन्न। आहुवः इत्येतेन द्विः तस्याऽन्वयस्य सुवचतरत्वात्।

अनू(न्-ऊ)ति[a]— -ती[b] ऋ ६, २९, ६.

अनूत्था(नु-उद् √स्था), अनु ··· उत्तिष्ठतु खि ६,१,२; ¶अनूदतिष्ठन् मै ४,८,५.

¶अनूत्-स्थाय तै ३, ४, १०, ३; ६, २, ५ ५; मै १, ९, ८; काठ ९, १५; २२, ११; क ३५,५.

¶अनू(नु-उद्)त √सृज्, अनूत्सृजति[c] मै ३, २, ७; काठ २०, ८; क ३१, १०; अनूत्सृजन्ति[d] मै ३,२,४; अनूत्सृजेत् काठ १३,३.

¶अनू(नु-उ)दक[e]— -कम् मै ३, १०,७.

अनू(नु-उ)द् √अय्>¶अनूद्(द्-अ)यय काठ २४,४; क ३७, ५.

¶अनू(नु-उ)द् √इ, अनूदयाथ मै ३,७,१.

अनूदेति काठ ८, ५; क ७, १; अनूद्यन्ति मै १, १०, १८; ३, ७, १[२]; काठ ३६, १३; अनूदेत् मै १,६,१२[f];२,५,३[g]; काठ १३,३[h].

अनूद्-यत्— -यन्तम् काठ १३, ४[g].

¶अनूदे(नु-उद्-आ √इ) अनूदेत्य काठ २२,११; क ३५,५.

¶अनू(नु-उ)द् √द्रु, अनूद्द्रवन्ति काठ ८,११; क ७, ८; अनूद्द्रवेत् काठ ६,६[i].

अनूद्-द्रुत्य काठ ६, ४[j]; ९, १६[n]; १०,५;२१[j],८;१०.

¶अनू(नु-उ)द् √(हृ>)धृ अनूद्-धृत्य[k]— -त्यः तै २, २, ४,७.

†अनू(न्-ऊ)धस्[l]— -धाः ऋ १०, ११५,१; कौ १,६४; जै १,७,२.

अनू(न्-ऊ)न, ना[a]— -नः खि २, १०, २; शौ ७, ८६, ३; पै ११, १,८; —नम् ऋ १, १४६, १; २, १०, ६; ४, २, १९; ६, १७, ४; खि ३, ७, ५ ‡[m]; मै ४, १३, ४ †; काठ १६, २१ †; शौ ७, ८६, ३; १२, ३, ४८; पै १७, ४०, ७; —नस्य ऋ ८,५५,५[m]; —ना ऋ ७,२७, ४; —नाः ऋ ३,१,५;८,१६,४; —नेन ऋ ४,५,१.

†अनून-वर्चस्[n]— -र्चाः ऋ १०, १४०, २; मा १२, १०७; का १३,७,६; तै ४,२,७, ३; मै २, ७,१४; काठ १६, १४; क २५, ५; कौ २,११६७.

¶अनू (नु √उ)न्द्, अन्वौन्दन्[o] काठ २७,५; क ४२,५.

†अनूप[p]— -पाः ऋ १०, २७, २३; —पे ऋ ९, १०७, ९; कौ २, ३४८; जै ३,२९,५.

---

[a]) तस. नञ्-स्वरः। उप. यद्र.।

[b]) स१ द्र. (वैतु. सा तृ१ इति; GW. प्रमृ. च१ इति [कथं बत रक्षाया अभावमभ्युद्दिश्य देवतायाः सुहवत्वं काम्येतेति त्वत्राऽवाञ्चः प्रष्टव्याः स्युः])। सा. व्यु.? (तु. सस्थ. टि. ऊती)।

[c]) पाभे. अनु तै ५,२,९,५ द्र.।

[d]) पाभे. अनु तै ५,२,५,४ द्र.।

[e]) उदकस्य समीपे इति कृत्वा समयाऽर्थे अस. (पा २, १, १५ [तु. सपा. तै ६,४, १,५ शुष्कस्य वार्द्रस्य च संधौ इति])। अन्तोदात्तः।

[f]) सपा. काठ ८, १० क ७, ६ अन्वागच्छत् इति पाभे.। [g]) पाभे. अनु तै २,१,४,५ द्र.।

[h]) पाभे. अनु तै २,१,५,१ द्र.।

[i]) पाभे. अनुद्रवेत् मै १,८,७ क ४,५ द्र.।

[j]) C [WZKM २६,१२६] °नुद्रु° इति शोधितः पाठ इति। पाभे. अनुद्रुत्य तै ५,४,५,५ प्रमृ. द्र.।

[k]) गस. क्यबन्ते कृत्-स्वरः प्रकृत्या (पा ६,२,१३९)।

[l]) विप. [([ऊधोवर्जिता-] द्यावापृथिवीरूपा-वा अरणीरूपा-वा) मातृ-]। बस. अन्तोदात्तः (पा ६,२,१७२ [तु. वें. सा. Gri.])। पाप्र. अनङादेशाभावः उसं.। उप. ऊधस्- (तु. अध्यूधस्- [काब्रा ४,८,३,११])। सकारान्तमस्त्रीपरमेतद् भवति (तु. पावा ५,४,१३१) एतदभ्युपायेऽपि यत् सा. लोकशब्दयोजनेन द्यावापृथिव्योरस्त्रीत्वं सिषाधयिषति, तन्मन्दम्। पूर्वार्धे तयोर्मातृत्वेनोपचारस्य तेन स्वयमभ्युपेतत्वात्।

[m]) सपा. °नम् <> °नस्य इति पाभे.।

[n]) विप. (अग्नि-)। बस. पूप. प्रकृतिस्वरम्। यद्वा तस. नञ्-स्वरः। उप. ऊन-वर्चस्- इति बस. द्र.।

[o]) सपा. मै ४,६,१ अभ्यधावन् इति पाभे.।

[p]) =आदित्य-, पर्जन्य-, वायु-। तस. उप. <अनु √वप् इति या [२,२२] प्रमृ. (तु. SEY १५७) इति च; जलप्रधान-निम्नदेश-, जलाशय-। बस. इति च। पाप्र. अनु-ऊ(<२अ)प्- [तु. या. प्रमृ.] + अः प्र. (समासान्तः) इत्येवं व्याकृतौ सत्याम् उप. आदि-विकारः (पा ५, ४, ७४; ६, ३, ९८)। प्र. स्वरः। यत्तु सूत्रे ऊद् इत्यस्य स्थाने उद् इत्यनेनापि पठितेन

अनू(प्यं>)प्या[a]- -प्याः काठ २,१[b]; क १, १३[b]; शौ १,६, ४[b]; १९,२,२; पै ८,८, ८.

¶अनू(नु-उ)प√जीव्, अनूपजीवन्ति मै ३,१०,४.

¶अनू(नु-उ)प√धा, अनूपदधाति काठ २१, ४; अनूपदध्यात् तै ५, २, ७, २; क ३१,१९.

अनूपधीयन्ते मै ३,२,९[३].

?अनूपनमति[c] मै ४,२,९.

¶अनू(नु-उ)प√स्था>तिष्ठ, अनूपतिष्ठन्ते[d] मै ३, २, ३; ९,२; काठ ६, ३; २९, ८; क ४,१; अनूपतिष्ठन्ते[d] मै ३,२,७, ७,७; ४,७,९.

?अनूपास्ते[e] पै १६,२१, १०.

¶अनूपे(नु-उप√इ), अनूपयन्ति[f] तै १,७,५,४.

अनू-राध- अनु√राध् द्र.

अनू-रोह- अनु√रुह् द्र.

अनू(नू-ऊ)र्ध्व->अनूर्ध्व-भास्[g]- -भासः ऋ ५,७७,४.

¶अनू(नू-ऊ)र्ध्वभावुक[h]- -कम् तै २,६,५,३.

†अनू(नू-ऊ)र्मि[i,j]- -र्मिम् ऋ ८,२४, २२; शौ २०,६६,१.

अनू-वृज्- अनु√वृज् द्र.

अनू-वृत्- अनु√वृत् द्र.

¶अनू(नू-ऊ)षरिह्[k,l]- -रिहः मै १,६,३.

†अनू(नू-ऋ)क्षर,रा[l]- -रः ऋ १, ४१, ४; २, २७, ६; -रा

सता पूर्वसवर्णदीर्घत्वेनाऽभीष्टरूपसिद्धिप्रस्तावे प्रत्युपस्थाप्यमानेऽवग्रहदोषः पाम. अचोदि, तद् यावदुपलब्धि पपा. अवग्रहस्यैवानुपलम्भाद् उप. ह्रस्वदीर्घान्यतरादित्वस्य विनिर्णेतुं दुःशकत्वात् तद्विषयस्योट्टङ्कनस्य नितरामनवसरत्वाद् भग्नभित्तिकत्वं द्र. । पामउ. च दीर्घोच्चारणस्याऽत्यावश्यकत्वाभावस्याऽवग्रहाभावे हेतुत्वमिव प्रदर्श्यमानमपि नादरणीयम् । यथाकामह्रस्वदीर्घान्यतरोच्चारणसद्भावस्याभीष्यमाणस्य सतो नितान्ताऽवग्रहाभावं प्रति कारणतानुपपत्तेरिति यावत् । वस्तुतस्त्वत्र वैयाकरणे प्रकरणे पूर्वसवर्णदीर्घात्मिकैव मौलिकी शाब्दी प्रवृत्तिः । तन्मूलश्चाप्यवग्रहाभावः । पूर्वोत्तरयोरुभयोर्वर्णयोः स्थान एकस्य समानस्य सत आदेशस्य विभागानर्हत्वात् । एवं च अनूप-, अभीपं-, द्वीप-, नीपं-, प्रतीपं- इत्येतान्येत्र प्राति. मौलिकानि सन्तीतरेषां सजातीयनिष्पत्तीनां वृत्तिसामान्योपजनितप्रवृत्तीनां सताम् अन्तरीप-, समीप- प्रमृ. आदर्शस्थानीयानि द्र. । अनूप- इत्यस्माच् च देशात्मकवृत्तिविशेषवतः सतो विवेककरणीव अन्वीप- इत्यस्य साम्यप्रवृत्तितो द्वितीयवर्गानुपातिनी प्रवृत्तिः द्र. । इह च सर्वत्र उप. विषये २अप्- इति स्याद् √आप् इति वैतयस्य विनिर्णयः २अप्- इत्येतत्-प्रसङ्गेन यद्र. । अन्ततः, द्व्यन्तर् इत्यादिविषयोपनिबन्धः द्व्यनवर्णनिपातेभ्योऽपः पूर्वसवर्णदीर्घः, समन्तर्भ्यामीत्, अनोरदेशे इत्याकारकः स्याद् इति विमृशा विमर्शाय कल्पताम् (तु. पा ६,३,९७;९८) ।

[a]) विप. (ाजलाढ्यदेशे भवा-ा २अप्-) । तात्रभविको यत् प्र. (पा ४,४,११०)। तित्स्वरः ।

[b]) =सपा. माश्रौ ६,१,५,२२ । तैआ ६,४,१ अनूक्याः इति पाभे. ।

[c]) पाठः? । स्वरोऽलक्षणो योगश्च विपरीतार्थकरः । अ-सू (सु-उ)पनमति इत्याकारकः शोधः विचारकोटौ द्र. ।

[d]) वैतु. सपा. तै ५,७,९,२ अनु टि. । यदनु तत्रासौ नि. कप्र. इष्टो भवति गनिश्च नेष्ट इति ।

[e]) पाभे. अनुवस्ते शौ ११, ६, १० द्र. । (अ)नूपस्ते इति पै. मूको. ज्ञापयति यथा मूलतस्तत्रापि शौ. अभिन्नैव सती श्रुतिः प्रामादिकम् (अनूवस्ते->°*नूपस्ते>) °नूप° इत्याकारं वर्णविकारमुपगतेति । एस्थि. मुपा. चिन्त्यकोटिमनुप्रविष्टः सन्नू शोधार्हः स्यान्न तु वास्तविकस्य कस्यचित् पाभे. सूचक इति ।

[f]) वैतु. सपा. तै १,७,५,३ अनु टि. यत्रासौ नि. कप्र. ।

[g]) विप. > नाप. (ाअनुच्छिन्नतेजस्क-ा शत्रु-ातु वें.ा) । पदविभागस्य सस्व. च वृते तु. टि. अजात-शत्रु- । यत्तु सा. उर्ध्व-भास्- इत्यस्य उप. अग्निपरत्वमपि विकल्पयति, तच्चिन्त्यम् । नञ्पूर्वत्वे बस. अन्तोदात्तत्वप्रसङ्गात् (पा ६,२,१७२) ।

[h]) तु. टि. अ-नग्नंभावुक- ।

[i]) विप. (इन्द्र-) । उप. विप. =हिंस्य- इति सा., हिंसक- इति वें., =चल- इति GW. ORN., =अवरुद्ध इति NW. । [j]) तस. नञ्-स्वरः ।

[k]) विप. (पशु-) । उप. ऊष- + √रि (=लि)ह् + क्विप् प्र. ।

[l]) विप. (पन्था-, पृथिवी-) । बस. अन्तोदात्तः । उप. =कण्टक- । √ऋष् + क्सरन् प्र. (पाउ ३, ७५) । निरस्वरः ।

ऋ १, २२, १५; मा ३५, २१; ३६, १३; का ३५,४, २०; ३६, १, १३; मै ४, १२, २; काठ ३८, १३; शौ १८, २,१९; -राः ऋ १०, ८५,२३; शौ १४,१,३४; पै १८,४,३.

अनृ(न-ऋ)चृ[a,b]- -नृचः ऋ १०, १०५,८.

¶अनृ(न-ऋ)चृ[c]- -चम् मै ३, ३, ५; काठ २१,५; क ३१, १०. [°च- एक°].

अनृ(न-ऋ)च्छ(त>)न्ती- -न्तीः पै १,३६,१-३.

अनृ (नृ-ऋ)जु[a]- -जोः ऋ ४, ३, १३.

अनृ(न-ऋ)णु[d]- -णः मा १९, ११; का २१, १, १०; तै ३, ३, ८, २; ४¶; ६, ३, १०, ५¶; मै ३, ७, ८¶; ४, १४, १७[e]; ¶काठ १३,२;२६, २; क ४०, ५¶; शौ ६, ११७, १; २; पै १६, ४९, १०; १९,३९, १२; -णम् पै १६,५०,१; ८; -णाः मै १, १०, २०[२]¶; काठ ३६, १४[२]¶; शौ ६, ११७, ३[४]; पै १६, ५०, २[४f]; -णेन काठ १३, ३¶.

१अनृ (न-ऋ) त, ता[g,h]- -तम् ऋ १, २३, [२२ (२३); १०, ९, ८ (९)]; १०५, ५; १३९, २; १५२, ३; ७, २८, ४; ८, ६२, १२; १०, १०, ४; १२४, ५; †मा ६, १७; †का ६, ५, ५; ¶तै २, ४,१, २; ५, ५, १;६; ¶मै १,९, ३; १०, ११[१]; २, १, ४[२]; ४, २[४]; ४, ७, ५; १४, १७[४] $; ¶काठ ६, ७[२]; ८, ७; ९,११; १०,७; १२, ५; ११[४]; १४, ५[१], २३, १[२]; ६; २७, ४[h]; ७[१]; ८; ३४, ११; ३६, ५[१]; ३७,१[२]; ¶क ४, ६[२]; ७, ४; ३५, ७[२]; ४२, ४[h]; शौ १, १०,३; २, १५, ५; ४, ९, ७;१६, ६[1]; ६, ६१,२; ३; ७, ९४, ३†; ९, १५, २३†; १०, २, १४; ५, २२; १२, ३, ५२; १८, १, ४†; १९, ४४, ८; पै १, ९,३; ३३,३;२, २६, १; ५, ३२, १; ३६, ४;५; ८; ६, ५, १२; ८, ३, १३; ९, २२, ४;१२;१६; २३; १५, ३, ८; १६, ६०, ८; ६९, १२†; १३०, १; १७, ४१, २; १९, १४, ८; २१, ४; २०, १५, ४; -तस्य ऋ ५, १२, ४; ७, ६०, ५; ६५, ३; ८६, ६; १०, ६७, ४; १००, ७; मै ३, ७, ३¶; शौ २०, ९१, ४†; -ता ऋ २, २४,६;७; ७, ६१, ५; ८४, ४; पै १९, २१, ७; -ताः पै २, ५५, ३; ४; -तात् मा १, ५; का १, ३,१; ¶मै १, १०, १२[२]; २, ४, २; ¶काठ १२, ११; ३६, ६[२]; पै ७, ८, ८[a]; -†तानि ऋ १, १५२, १; २, ३५, ६; मै ४, १४, १०; -ते मा १९, ७७; का २१, ५, ४; मै ३, ११, ६; काठ ११, ३; ३८, १; -तेन ऋ १०, ८७, ११; ¶मै १, ९, ३;११, ५; २,४, २; ¶काठ ९, ११; १२, ११; १४, ५; शौ ६, ७१, ३; ७, ७३, २; ८,३, ११†; पै २, २८,२;५,३२, ६; १६, ७, १†; १९, २७, २; -†तेभिः ऋ ७, १०४,८; शौ ८,४,८; पै १६, ९, ८. [°त- सत्य°].

†अनृत-देव[j]- -वः ऋ ७, १०४, १४; शौ ८, ४, १४; पै १६, १०,४.

अनृत-द्विष्[k]- -द्विषः ऋ ७, ६६, १३.

¶अनृत-पशु[l]- -शू मै १,१०,१२;

---

a) तस. नञ्-स्वरः।

b) समासान्ताभावः उसं. (वैतु. नाउ.)।

c) बस. समासान्तः अः प्र. (पा ५,४,७४ [वैतु. नापू.])। तत्स्वरेणान्तोदात्तः।

d) बस. अन्तोदात्तः।

e) अनृणः इति पाठः? यनि. शोधः (तु. तै ३, ३,८,२)।

f) एकतरत्र पाठः? अनृणः इति शोधः (तु. सस्थ. टि. ?अदीप)।

g) विप. (वचस्- प्रभृ.), भाप. (असत्य-)।

h) सपा. तै ६,४,८,१ क्रूरम् इति पाभे.।

i) अनृतं वदन्तम्>सपा. आश्रौ १,३,२४ शांश्रौ १, ६,३ आपश्रौ २४,१२,७ पाकम् इति पाभे.।

j) विप. (असद्-)। बस. पूप. प्रकृतिस्वरम् (पा ६, २, १)।

k) उस. क्विबन्ते कृत्-स्वरः प्रकृत्या (पा ३,२,६१;६, २,१३९)।

l) तस. मध्यमपदलोपः सास्व. च (तु. अनृतेष्टका-माश ६,२,१,३८)।

काठ ३६,६[a].

अनृत-वाच्[a]- -वाक् काठ ४,१६, शौ ४,१६,७; पै ५, ३२,८.

अनृत-वादिन्[a]- -नम् पै ९,१९,२.

¶अनृतवादिनी- -नी मै ४, ५,२.

२ अनृ(न्-ऋ)त[b]- -ताः ऋ ४,५,५.

अनृ(न्-ऋ)तुपा[c,d]- -पाः ऋ ३, ५३,८.

? अनृतुभिः क्रम्यम्[e] मै ३,६,७.

¶*अनृ(न्-ऋ)त्विज्[d]- -त्विजे काठ २८,५[f]; क ४४,५[f].

अ-नृम्ण[f]- -म्णम् पै १९, ५०, १०; ११;१२.

?अनेकः पै २०,३९,१.

?अनेकवत्- -वन्तम् काठ २१,१३[g].

¶अने(न्-ए)कादशि(न्>)नी- -नीम्[h] काठ २२,७; क ३५१.

?अनेकाम्[i] पै ६,२,६‡.

अने(न्-ए)जत्[d]- -जत् मा ४०,४; का ४०,१,४.

?अने(न्-ए)जित[j]- -तः पै ९, ६, १२.

†अ-नेद्य[k,d]- -०द्य ऋ ⌊८, ३७,१-६⌋; -द्यः ऋ १, ⌊८७, ४ (२, २३,११)⌋;५, ६१, १३; मै ४, ११,३; काठ ९, १८; -द्याः ऋ ६,१९,४.

?अ-नेद्यः[l,d] ऋ १,१६५,१२.

अने(न्-ए)नस्[m]- -नः[n] ऋ ६, ६६, ७; -नसम् तै १, ८, ५, ३; -नाः ऋ १, १२९, ५; ७, २८,४; ८६, ४; मै ३, १०, १¶.

अने(न्-ए)वम्-उत्सृष्ट[o]- -ष्टौ काठ १३,३.

? अने(न्-ए)वा[p,d] शौ १६, ७,४.

†अने(न्-ए)हस्[q]- -हः ऋ १, १८५, ३; ६, ५०, ३; ८,१८,

---

[a]) उस. ताच्छीलिके क्विबन्ते कृत्-स्वरः प्रकृत्या उप. दीर्घश्च (पावा ३, २, १७८; पा ६, २, १३९)। यद्वा अनृ-ऋत-वाच्- इति नञि पूप. बस. अन्तोदात्तः (पा ६,२,१७२)। अस्मिन् कल्पे उप. तस. मध्यमपदलोपः (तु. नापू. टि.)।

[b]) विप.। बस. अन्तोदात्तः । वाक्यान्वये द्वि१ सत् क्रिवि.।

[c]) विप. (मघवन्-)। [d]) तस. नञ्-स्वरः।

[e]) पाठः? अनृतु, निष्क्रम्यम् (दीक्षितेन दीक्षितविमिताद् न) इति शोधः। [f]) तस.।

[g]) पाठः ⌊तु. BC.⌋? अनीकवन्तम् इति शोधः (तु. खि ४,१४,१ आश्रौ २,१८,३ च)।

[h]) अनेकादशिनीं कुर्यात्>सपा. तै ५, ५, ७, १ एकादशिनीं न मिनुयात् इति पाभे. (तु. सपा. मै ३, ४,८)।

[i]) °मिदेकाम् (>°*मदे°> °मने°) इत्याकारो विकारः मूको. प्रत्येतव्यः (तु. पाभे.)। अन्यथाऽनभीष्टार्थ-प्रतीतिकरत्वे मर्षितेऽप्यवरतो रूपं द्वित्ववद्बहुत्ववद्वा स्यान्न त्वेकत्ववदिति दिक्। एस्थि. शोधः सावसरः द्र.। सपा. ऋ १०,५,६ एकामिद् इति, शौ ५, १,६ इदेकाम् इति च पाभे.।

[j]) पाठः (तु मूको., र. °जातः इति)? अने (न्-ए) जत्- (विप. ⌊क्रिमि-⌋) >-जतः इति शोधः (तु. BKA, Renou ⌊ Vāk ५,७६⌋)।

[k]) विप. (इन्द्र-, जरितृ-)। उप. <√नेद्(कुत्सायाम्)।

[l]) विप. (श्रवस्-)। उप. नेद्यस्- = निन्दनीय- इति (तु. वें. सा.; वैतु. सा. ⌊पक्षे⌋, HLR. < नेदीयस्- इति; ORN. ⌊मरुतां गण-⌋ इति; GW. °द्याः ⌊मरुतः⌋ इति शोधः MVH. °द्यम् इति शोधश्च)। GG. अ-नेदी->⌊द्वि३⌋ °द्यः ⌊इषः⌋ इति।

[m]) विप. (अस्मद्-, इन्द्र-, वरुण-)। बस. अन्तोदात्तः।

[n]) विप. (मरुतां याम-)। वा. इदं रूपम् प्र१ <अने(न्-ए)न- इति, उप. च एन- इति एनस्- इत्येतत्सजन्मेतीवाभिप्रैति GRV. (तु. NW.; यत्तु तत्र सा. अप्येवमभिप्रैतीति समर्केति, तदसत्। यनि. द्वि१ क्रिवि. चेत्येवमेव तस्याभिप्रेतत्वात्। यदपि PW. GW. MW. चेह उप. एन- (=एत-=हरिण-) इत्यनुपदं श्रूयमाणस्य अनश्व- इत्यस्य संस्कारसाम्यादाश्रिषत तदपि चिन्त्यम्। अनश्व- प्रभृ. पदानामन्वयान्तरस्य प्राकरणिकतरत्वात् (तु. सा.)।

[o]) तस.>तस.।

[p]) पपा. अनेव इति ह्रस्वान्तं रूपं भवति। तच्चिन्त्यम्। एवम् इत्येतत्-पर्यायभूतस्य दीर्घान्तस्य तृ१ सतः क्रिवि. संगततरत्वप्रतीतेः (तु. सस्थ. एव, वा)।

[q]) विप. (⌊अप्रतिम-, अप्रतिहत-, अहिंसित-⌋ इडा-, द्यावापृथिवी-, पथिन्- प्रभृ.); भाप. (निरापत्ति-, पाप-राहित्य- ⌊ऋ ६, ५०, ३; ८, ३१, १२; ६७,१२⌋)। बस. अन्तोदात्तः उप. <√हन् >एह् इति पाउ ⌊४, २१८⌋, <√ईह् (इच्छायाम्) इति PW. GW. प्रभृ.।

२१ ; ३१, १२ ; ६७ , १२ ; -हसः ऋ ३, ५१, ३;[५, ६५, ५; ८, ४७, १-१८]; ८, [(५, ६७,४);१८,५]; ४५,११; १०, ६१ , २२ ; मै ४ , १२ , ३ ; -हसम् ऋ १, ४०,[४; ३, ९, १ (५, ३४,७;८, १०३,५; ९, ६६, ७)];६;[६, ५१, १६; ८, ६९, १६] ; ८, २२, २; ४९, ४ ?[a]; ५०, ४; १०, ६३, १०; खि ३, १,४;२, ४; मा ४, २९; २१, ६; का ४, ९,६; २३, १, ६; तै १, २,९, १; ५, ११, ५; मै १, २, ५;४, १०, १; काठ २, ३; ६ ; क १, १९ ; कौ १, ६२; जै १,६ ,८; शौ ७, ७,१; २०, ९२, १३; पै २०, १, ९; -हसा ऋ १, १२९,९;६, ७५, १०; मा २९,४७; तै ४,६,६,४; काठ ४६,१; पै ४,२४,७; १५, १०,१०.

?अनेहा ऋ १०, ६१, १२[b]; शौ ६, ८४,३[c].

?अनोहितास् पै १७ १२,५.

अन्त, न्ता[d]- -न्तः ऋ १, ५४, १; १६४, ३५[e] ; ६, २९ , ५; १०, १११,८; मा १७,२; २३, ६२† [e]; का १८, १, ३; २५, १०,१०†[e]; ¶तै ४, ४, ११,४; ७, २, ७, २; ८,५; ३, १, ४; ¶मै १, ९, ७; १०, १८[२]; २, २, ९[f];८, १४; ३,६,१[f]; ४,३, १; ४, ३[२]; ६, ६; ¶काठ ११, ४; १२,४; १७, १०; १९, ९; २६, १;३०, ३; ३२, ३; ३६, १२[२] ; ¶क २६, ९ ; ४०, ४; ४६, ६ ; शौ ९, १५, १४†[e] ; पै १६, ६९, ४†[e]; -न्तम् ऋ १, ३३, १०; ३७, ६[g]; ५२, १४; [१००, १५; १६७, ९]; १६४, ३४; १७९, २; ५, १५ ५; ६, ४३, २; ७, २१, ६; ९९, २;८, ४६,११; १०, ५४, ३; ११४, १०; मा २३, ६१†; का २५, १०, ९†; ¶तै २, ४, ११, २[२]; ३; ७, २, ७, २; ३; ८, ६;४, १५,१†; १८, २[२]†; ‡५[e]; ८, १[२]; २; ¶मै १,६, १३; ९,७; १०, १६; १९; २, २, ९[१]; १३; ४, ४[२];५; ३, ६, ६; ४,४, ३;५[२]; ६, १ ;७, ७; ८, १०[२]; ¶काठ १०, ८[२]; ९; ११,४[२]; १२,४[२]; २६, १; २७, १; २९, ४; ६[२]; ३०, २; ३[२]; ५; ३६, १०; १३[२]; ४४, ४; ७[२] †; ‡[e]; ¶क ४०, ४ ; ४२, १; ४४,१; ४५, ५; ७[२]; ४६, ५; ६[२]; जै २, २, ४?‡[h]; शौ ९, १५, १३† ; १०, ७, ४२; १२, ३, ३४; १५, ७,१; पै १६, ६९, ३† ; १७, ३९ , ५ ; -न्ता ऋ ४ , १ , ११; -†न्ताः ऋ ७, ६७, २; ८३, ३; १०, ८२,१; मा १७, २५; का १८, ३, १ ; तै ४ , ६, २, ४ ; मै २, १०, ३ ; काठ १८, २; क २८, २ ; $शौ १, १७, ३[i]; १४, २,५१; पै १८, १,१ १०; १९, ४, १३; -न्तात् ऋ

---

a) अनेहस् [क्रिवि.], त्वम् इति द्विपदः शोध इति मतम् ।

b) कारवः इत्येतदन्वितं सत् प्र३ द्र. [वैतु. सा. प्र१ (इन्द्रः) इति । उभयथापि पपा. विसर्गान्तत्वाऽभावः समानं दुर्घटः । प्र३ इति पक्षे ?*अने (न्-ए)हु- > -हाः इति वा स्यात , अनेहस्- > (मौलिके संपा.) *ऽनेहासः > (उत्तरे संपा.) *अनेहा (=अन्त्याधिकाक्षरच्युतिः) > (उत्तरतरे संपा.) ऽनेहा इति वा (वैतु. GW. L ५५१ *b*, ५५९ *b* अनेहसः > *अनेह अः > अनेहाः इति)] ।

c) निर्ऋति- इत्यस्य विप. इति प्र१ सद् < *अने (ह > ) हा < अनेहाः (विसर्गच्युतौ) इति वा < अनेहस्- इति वा (तु. NW. टि. अनेन इति)। सपा. पै १९,५,१३ विश्ववारे इति पाभे. ।

d) नाप. (पर्यवसान-, सीमन्-, पर्यन्तभाग-, संख्याविशेष- [मा १७, २ प्रमृ.]), भाप. (समीप-, अन्तिक- [ऋ १, ३०, २१ प्रमृ.]) । व्यु.? √अम् (गतौ) + तन् प्र. नित्स्वरश्च (पा ३३,८६) । या [४, २५] प्रमृ. < √अत् इति । यत्त्वेतत् प्राति. < √अन्त् इति MW. आह । तन्न । तदपेक्षया नाधा. असावित्यस्य मतस्य तत्त्वस्य नेदीयस्त्वप्रतीतेः (तु. GW. NW. WW [१, ६७ उउ.]) यतो मूलतः √*अन् (यद्द.) इति प्रकृत्यंशतया त इति च प्रत्ययांशतया निर्धार्यत्वेनोपतिष्ठेयाताम् ।

e) सपा. °न्तः (माश १३, ५,२,२१ आश्रौ १०,९,३ प्रमृ. च) <> °न्तम् इति पाभे. ।

f) °न्तुः इति पाठः? स्वरः शोधापेक्षः ।

g) =वस्त्र-सन्धि-, सीवन- इति ORN. ।

h) अन्तम् आः इति पाठः? अन्तमाः इति शोधः (तु. ऋ ६,५२,१४ कौ ३,३,९) ।

i) विप. ([अन्तिमा-] नाडी-) इति (तु. पै १९,४, १३; सा. ; वैतु. W. अन्त्याः इति पाठः श्रेयान् इति) ।

१, ३०,२१; ३, ६१, ४; १०, ८९, ११ ; तै ७, २, ७, ३¶; ¶काठ ११, ४; ३०, ३; क ४६, ६¶ ; कौ १, ७१‡[a]; जै १, ७, ९‡[a]; शौ १८, ३, ६५‡[a]; -न्तान् ऋ १, ९२, ११; ४, ५०, १; ५, ४७, ४; ५९, ७; ६, ६२, १; ७, ४५, २; ६९, ३;८, २५, १८; १०, ८, १[a]; २०,४; ८९,१; १०८, ५; †मै ४, १२, ५; १४, १०; †काठ ९, १९; ११, १३; २५, ६; †क ३९, ३; शौ १४, १, ४५[b]; २०, ८८, १† ; पै १५, ५, ६[b]; १६, १०३, ६; १५०, ६; १८, ५, २[b]; -न्ताय मा ३०, १९; का ३४, ४, १ ; तै ७, २, २०, १ ; काठ ४२, १० ; -न्ते ऋ ४, १६, २ ; १०, ३४, ११; ¶तै १, ७, ६, ४; ६,१, ९,३[c]; ७, १,६, ६; ५, ८, १[२]; ¶मै १, ९, ७; २, २, ९[२]; ३, ९, २; ४, २, १; ४, २; ६, २; ¶काठ ७, ११; १०, ८ ; ११, १० ; २४, २[c]; २६, ३; २७,४;२९, ६; ¶क ३७, ३ ; ४२, ४ ; शौ २०, ७७, २† ; पै १९, २५, १; -न्तेन ¶मै २, २, ९[२]; ४ ४, ३; -†न्तेभ्यः ऋ १, ४९, ३; ८,८८, ५[d], काठ १६, १३‡[e]; क २५ ४‡[e]; कौ १, ३६७ ; जै १, ३८, ८; -न्तेषु ऋ ७, ७९, २; तै ५, ७, १० , ३¶ ; काठ ३७, १६¶; -†न्तौ ऋ ५, ४७, ३; खि ३, २२, ६; मा १७,६०; का १८, ५, ११; तै ४, ६, ३ , ४ ; मै १ , १०, १४.¶ ; २, १० , ५; ३ , ६, १¶[f]; ४, ३, १[२]¶; काठ १८, ३ ; ¶१९ , ९ ; ¶२२ , १३; ¶२८, १;३६, ८; क २८, ३; ४४,१¶; $शौ ६, ८९,३;१३, २, ६; १३ ; पै २, ३५, ५$ ; ३, १५, ६$ ; १६, १०३, ७, १८, २०, १० ; २१, ७. [°न्त– अति°, अन्°, आ°, आदित्य°, १इडा°, १ईमं° उप°, तीव्र°, त्रिष्टुभ्°, दूरे°, बहुल°, भस्मन्°, भिन्न°, मण्डल°, यज्ञ°, १ विष्ट°, २ वेद°, वेदि°, १संहिता°, समा°, सूक्त°].

¶अ॒न्त-ग(त>)ता[g]– -ताः तै १,५,९,१.

¶अन्त-त॒स् (:)[h] तै १, ७ ४, ४; २, २, ७, ५ ; ५, ४, ३ , ३; १०, २;७, १०, ३, मै १ १०, ५[२]; ३, १,१[२]; ४,२;८,५[२];४, ३,८;८,३[२];६[२]; काठ १८,१९[२]; २१,११[२]; २२,१; २३,९; २४, ४;२५,१०;३२ ३; ३४,१[२];३५, २०[२];क २९,७[२]; ३६,६;३७,५; ४०, ३; ४८, १८[२]; शौ १४, १,६४$; पै १८,६,१२$.

¶अ॒न्त-नामन्[i]– -मानौ तै ७, ४, ८,१[२].

१अन्त-म॒, मा॒[j]– -¶मम् तै ५, १, १, ३ ; ६, ३ , ९, ५; मै १, ५, १३ ; काठ ३५, १६; क ४८, १४ ; -मस्य ऋ ३, ५५, ८; -¶माः तै ६, ४, २, ३[२]; मै ४,२,७;-¶माम् तै ५, १,१,३; -†मेभिः ऋ १,१६५, ५; मै ४,११, ३; काठ ९,१८.

अ॒न्त-वत्– -वत् शौ १०,८,१२; पै १६,१०१,८.

√अन्ति[k]

अ॒न्तक[l]– -कः शौ ६, ४६,

[a]) सपा. °न्तात् ( तैआ ६, ३, १ च) <>न्तान् इति पाभे. ।

[b]) सपा. पागृ १,४,१३ तन्तून् इति पाभे. ।

[c]) अपामन्ते> सपा. मै ३,७,४ अप्सु इति पाभे. ।

[d]) सपा. कौ १,३१२ जै १,३२,१०; ४,६,१ सदोभ्यः इति पाभे. ।

[e]) सपा. ऋ १०,९७,१७ ओषधयः इति पाभे. ।

[f]) अन्तौ इति मुपा. अन्तोदात्तश्चिन्त्यः ।

[g]) सस. पूप. प्रकृतिस्वरम् (पा ६, २, २) ।

[h]) तसिः प्र. (पावा ५,४,४४) । तत्स्वरः ।

[i]) विप. (ऋतु-) । बस. पूप. प्रकृतिस्वरम् ।

[j]) पपा. अवग्रहाभावः ( तु. चरम–, परम-, मध्यम– प्रभृ.) । मः प्र. उसं. (पावा ४, ३, ८) । तत्स्वरः । भा. तु अन्तिम->अन्तम- इति च्छान्दसः (प्राकृतिकः) वर्णविकारो वा स्यात् प्र. ( डिमचः ) आदिलोपो वा स्यादिति विकल्प्य अन्तिक-+तमप् प्र. इत्येवं प्राति. तादिलोपमुपाश्रित्य विकल्पान्तरं ब्रुवाणोऽपार्थगौरवश्रद्धः स्याद् अन्ति– इत्यस्य प्राति.(यप्र.) मः प्र. च यनि. पृथक् सुकल्पत्वात् । अन्तर– इत्यनेन सन्यायमिति BL. ।

[k]) तत्करोतीत्यर्थे णिजन्तः नाधा. ।

[l]) विप., नाप. (मृत्यु–, यम–), व्यप. ( राजन्- ⌊ऋ १, ११२,६⌋; मार्त्यव- ⌊शौ ८,१३,७⌋) । ण्वुल् प्र. लित्स्वरश्च (पा ६, १, १९३ ) । वैप२ १अन्तक- , २अन्त-कृ- द्र. ।

२; ८, १२, ७; १६, ५, २; ४-७; ९; १९, ९, ७; पै १६, १३५, ३; -कम् ऋ १, ११२, ६; -काय मा ३०, ७; १८[a]; ३९,१३; का ३४, १,७;३,५[a]; ३९,९,३; शौ ८,१,१; पै १६, १,१.

अन्तक-द्रुह्[b]- -ध्रुक् ऋ १०, १३२,४.

१अन्त्य, न्त्या[c]- -न्त्यः तै[d] १, ७, ९, १; ४, ७, ११, २; मै १, ११, ३; काठ १८, १२; क २९, १; -न्त्या काठ १०, ८; -न्त्याय काठ १४, १; -¶न्त्ये तै २, २,७, ५; काठ १०,९[10].

१आन्त्य[f]- -न्त्याय[g] मा ९, २०[h]; १८,२८; २२,३२[1]; का १०, ४, १[h]; १९, ९, १; २४, १९,१.

आन्त्यायन[i]- -नः[j] तै १, ७, ९, १; ४, ७, ११, २; -नाय[1] मा ९, २०; १८, २८; का १०,४, १; १९,९, १; २४,१९,१.

२आन्त्य[k]- -न्त्यः[d] मै १, ११, ३; काठ १८, १२; क २९, १; -न्त्याय काठ १४,१[g].

१अन्तम- अन्त- द्र.

†२अन्त (न्-तं) म, मा[l]- -मः ऋ ३, १०, ८; ५, २४, १;६, [४५, ३०; ८, ५, १८]; ४६, १०; ८, १३, ३; ४५, १८; ६४,९; १०, १००, ६; मा ३, २५; १५, ४८; २५, ४७$; का ३, ३, १७; १६, ५, ३०; २७, १५, २$; तै १, ५, ६, ३; ३,१,१०, ३$; ४, ४, ४, ८; मै १, ५, ३; १०; २, १३, ८; काठ ७, १; ८[२]; क ५, १; कौ १,४४८; २,९८; ४५७; जै १, ४७, २; ३, ९, १२; ३४, १५; शौ २०, ८३, २; -मम् ऋ ८,३३, १५; -मस्य ऋ १, २७, ५; कौ २, ८४९; जै ४, १२,१; -मा ऋ ७,२२, ४; कौ १, ११४८; -माः ऋ ६, ५२, १४; कौ ३, ३, ९; -मानाम् ऋ १, ४,३; कौ २, ४३९; जै ३,३३,१३; शौ २०, ५७,३;६८,३.

अन्तःकोश- प्रमृ. अन्तर् द्र.

अन्त (न्-तं)र्(>:, श्)[m] ऋ १, २३, १९; [२०; १०, ९, ६];

---

[a]) सपा. तैब्रा ३,४,१६,१ निर्ऋत्यै इति पाभे.।

[b]) विप. ([हिंसक-द्रोग्धृ-] वरुण-)। उस. कर्तरि क्विबन्ते कृत्-स्वरः प्रकृत्या (पा ६,२,१३९)।

[c]) विप., नाप. (संवत्सर- इति भा., मार्गशीर्ष-मास- इति सा. [तै १, ७,९,१ प्रमृ.]) । तात्रभविकेऽर्थे यदन्ते आद्युदात्तत्वम् (पा ६,१,२१३)।

[d]) सपा. अन्त्यः <> आन्त्यः इति पाभे.।

[e]) सपा. मै २,२,९ यज्ञिये इति पाभे.।

[f]) = [संवत्सराभिमानिन्-] प्रजापति- [=भौवन]। अपत्येऽर्थे यञ् प्र. उसं. (पा ४, १,१०५)। ञित्स्वरः। समानार्थीयो भिन्नशाखीयोऽन्तोदात्तः एउ. द्र.।

[g]) सपा. आन्त्याय (माश ५,२,१,२ काश ६,२,२,१ च) <> आन्त्याय इति पाभे.।

[h]) अत्र पपा. उ. म. च अन्त्याय इत्येवमुशन्तः शुक्लयजुःसंप्रदायानुरोधाद् भग्नभित्तिका एव (तु. सा. [का.] BC. च)।

[i]) नाप. [मास-(तै १,७, ९,१ [तु. भा. वैतु. पक्षे च <अन्त्य- इति])]। यञन्ताद् गोत्रापत्येऽर्थे फक् > आयनः प्र. कित्-स्वरश्च (पा ४,१,१०१; ६,१,१६५)। यत्तु म. (मा १८, २८) अन्त्य-अयन- इति समुदितशब्दद्वयात् तात्रभविकेऽर्थे प्र. इत्याह तत् पपा. विरोधाच्चिन्त्यम्।

[j]) सपा. परस्परं पाभे.।

[k]) =१आन्त्य-। अपत्येऽर्थे अण् प्र. उसं. (पा ४, १, ११२)। तत्स्वरः।

[l]) व्यु.? पपा. नावग्रहः (वैतु. शं-तम-)। अत्र ३*अन् इत्यस्य स्थाने अन्तिकं- इति पूप. भवति तादिलोपश्चेति प्राञ्चः (पावा ६, ४, १४९)। अन्त- इति पूप. भवतीत्यर्वाञ्चः (तु. PW. प्रमृ.)। तमप् प्र. इति तु सर्वसंमतम्।

[m]) ३*अन् + (√तॄ>)*तर्- इत्येवं गस. विजन्ते कृत्-स्वरः प्रकृत्या [पा ६,२,१३९ [तु. WW १,१२६]; वैतु. √अम्+(त) अर् (अन्) प्र. (पाउ ५,६०)। नित्स्वरश्च]। व्यु. कृते तु. टि. अनीक-, अन्तम-, अन्तर-। वाच्यस्याऽधिकरणताऽनुरञ्जितत्वस्वाभाव्यात् क्रियया तदत्यन्तसंयोगप्रद्योतनार्थं मूलतः द्वि. प्रयोगस्य सावसरत्वे सति (पा २, ३, ५) वस्तुतः द्वि१ एव सतो रूपस्य सामान्येनैतत् क्रिवि. इति अव्य. इति ग. इति कप्र इति चोत्तरोत्तरं बुद्धयः समजनिषत (तु. पाम १, ४, ६५)। एस्थि. अन्तरा एतदीयं प्राचीनं तृ१ एव सद् अव्य. इत्य् एतद्वद् दिक्कालाधिकरणताऽनुरञ्जितवाच्यप्रधान-शब्दान्तरवत् प्रसिद्धिमगात् (तु. *पुर्- > पुरा,

२४, ७ ; ५४, १०; ६२, ९[a]; ६७, ५ ; ७०, २ ; ९५, १०[b]; ९६, ५[c]; १०५, १; ११६, २४; १३०, ३; १३२, ३[d]; १३५, ९[e]; १५७, ५; [१५९, ४ ; १०, १७७,१]; १६१, ४; १६३, ४ ; १६४, ९; १७[f]; [३१; १०, १७७, ३]; ३२[g]; ३३ ; १६८, ५; १७३,३[h]; १८०, ३; १८२, ६ ; २, १२, ३; २७, ३[d]; ८ ; ३५, ७ ; [४०, २; ६, ७२, ४]; ३, १, ३ ; १४; ६, ४[h]; ३८, ३[i]; ४४, ३[j]; ५४, ९ ; ५५, २ ; ५ ; [९[j]; १०, ४, २]; १२; १५; ५८, १; ४, १, ७[k]; [१३; ५, ३१, ३]; २, २[l]; ३[l]; ७, ८; १३, ४ ; १६, १७[m]; १८, ४ ; २७, ४[m]; [(१, १२४, १०); ५१, ३]; ५८, ६ ; ११[a]; ५, ५९, २ ; ६२, ५ ; ६ ; ६, ४, ४; ९, ५ ; ११, २; २७, ७[j]; ४३, ३; ४४, २४ ; ५८, ३ ; ६६, ४; ७२, ४[a]; ७, २, ३; ११, ३; १२, १; १८, २४; ७१, ५[n]; ८६, २[o]; ८७, २; ५ ; १०४, ३; ८, २, ४; २९, २; ३; ३९, १[p]; ४८, ९; ६८, १८; ७२, ३[q]; १००, ९;

दक्षिण->दक्षिणा; *पश्च->पश्चा, उत्तर->उत्तरा, मध्य->मध्या) । एवम् द्वि उ. टि. अन्यस्यैव स१ इति द्र. (वैतु. GW. *अन्तरि>अन्तर् इत्यन्त्यलोपत इव परिणामं संभावयन् सन् वस्तुतो जातक्रमात्रं जनकीयमान इत्युपेक्ष्यः) ।

[a]) आमासु इति सप्तम्यर्थवचनः कप्र. (तु. स्क. सा.; वैतु. वें. GW. अन्तः ···दधिषे इति) ।

[b]) सप्तम्यर्थोपबृंहणः कप्र. (वैतु. सा. GW. प्रमृ. अन्तश्‌ √चर् इति) ।

[c]) द्यावाक्षामा इत्येतदभिसंबद्धम् अव्य. (वैतु. GW. SI. अन्तर्विभाति इत्येवमपलक्षणतां सौवरीमवगण्य्योपसर्गीयमाणौ) ।

[d]) अनुपदश्रावितादर्शनक्रियां प्रत्य् अधिकरणत्वस्य विवक्षकः द्र. (तु. वें.; वैतु. सा. प्रथमे स्थले द्विताऽन्तर् इत्येवं संबन्धुकः, PW. GW. च अन्तःपश्यन्ति इत्येवं योजुकौ । इह कर्मणोन्तर्दर्शनं नेष्टमिष्टं च कस्यचिदन्यस्याऽन्तस्तत्कर्मीभूतवस्तुदर्शनमिति विवेकः यनि. विनिगमकः ।

[e]) वैतु. GW. अन्तः पतयन्ति इति योजुकः ?

[f]) सपा. शौ ९,१४,१७; १३, १,४१ पै १६, ६७,७; १८,१९,१ अस्मिन् इति पाभे. ।

[g]) सप्तमीवचनः कप्र. (वैतु. GW. अन्तः···परिवीतः इति) । [h]) द्यावा इति द्वि. युक्तः कप्र. (तु. टि. ऋ १०,९६,११ आ) ।

[i]) अन्तर्धापनार्थस्य प्रसङ्गाऽभावाद् अन्तर्···धुः इत्येवं योजुकः GW. चिन्त्यः ।

[j]) सप्तम्यर्थोपबृंहणः कप्र. (तु. वें. सा.; वैतु. PW. प्रमृ. अन्तश्‌ √चर् इति) ।

[k]) सप्तमीवचनः कप्र (वैतु. GW. अन्तः परिवीतः इत्येतदीयाऽयुक्तत्वं स्वरतोऽपि सुवेदमिव) ।

[l]) द्वि. युक्तः कप्र. (तु. वें. सा. ; वैतु. GW. [प्रथमे स्थले] अन्तर्···ईयसे इति, अन्यत्र अन्तरीयसे इति [तु. सस्थ. टि. आ···ईयसे] च योगः इति) ।

[m]) सप्तम्यर्थोपबृंहणः कप्र. (तु. वें. सा. PW.; वैतु. वें. GW. अन्तः √पत् [गतौ] इति युजुकौ) ।

[n]) निधानक्रियाधिकरणोपबृंहणार्थम् अव्य. (तु. सा. PW.; वैतु. GW. अन्तः···नि···धातम् इति) ।

[o]) भुवान इत्युत्तरेण व्यवहितेन क्रिप. गतियोग इति PW. प्रमृ. आहुः । तन्न । अन्तर्भावस्य गस. सतोऽन्तर्भाव्यस्य सत्तायामन्तर्भावुकस्य सत्तायाः पार्थक्येनाऽभिव्यक्त्यभावे सति विलयानर्थान्तरत्वेन प्रसिद्धेरिह च तथाविधस्य स्तोतृ-सत्ताया देवतासत्तायां विलयस्य प्रसङ्गाऽश्रुतेः । यदपि सा. स्तोतृदैवताभिसंबन्धेनाऽऽन्तरिकीं सतीमपि पृथग्भूतां स्थितिं स्पष्टं भाषमाणोऽप्यन्तर्वर्तित्वमात्रं गम. अनुमन्वान इव लक्ष्यते, तदपि तदुपस्तम्भकश्रौतप्रामाण्यानुपलम्भादेवाऽप्रमाणं द्र. ।

[p]) उभे विदुथे इत्येतदन्वयी कप्र. (वैतु. सा. विदुथे इत्येतत् सर इत्येते आन्तः सन् द्यावापृथिव्याक्षेपशरणः; PW. प्रमृ. च अन्तश्चरति इत्येवमनुपपन्नस्वरमाख्यातं साधुकाः सन्तो दूत्यं √चर् इत्यस्याः साध्व्या वाचोयुक्त्याः स्थाने पुनरुक्तदुष्टामिव सतीं दूत्यम् अन्तश्‌ √चर् इत्याकारिकां वाचोयुक्तिं प्रवर्तयितुकामाः) ।

[q]) जने इत्यधिकरणार्थोपबृंहणः कप्र. (तु. सा. PW. ; वैतु. GW. MW. अन्तरिच्छन्ति इति मन्वानौ) ।

१०१, ९; १३; १४[a]; ९, १२, ५; ७; १५, ३; ६७, २३[b]; ६९, २; ७२, ७; ७३, ८[c]; ७८, ३[d], ८९, ४; ८६, ४[e]; ८७, ८; ८९, ५; ९६, ७[f]; १०७, १[g]; १०८, ६; १०, ५, ५[h]; ८, ७; २७, ९; १७[i]; ३०, ४; ३९, १३; ४२, ८; ४५, ३; ४[j]; ४६, ६[k]; ४८, १०[२]; ६१, १; ७९, ३; ८०, ३; ८६, १५; १०१, ११[l]; १०६, ११; १२४, ४; १२५, ७; १६२, ४; १७३, १; १७७, २; १८३, ३; १८९, २[l]; खि ४, ४, ३; ५, ३५;

११, २; ३; ५, १६, ६; मा ३, ७†; ४, १२; ८, २५; ३०[l]; ९, ६†; १०, ७; ११, ३१; १२, २†[m]; ६†[j]; ११[n]; १५[o]; १६; २०†; २१†; ३३†; ३९; १३, ३८†; †१७, ७०; ९४; ९९[२]; १९, २†[g]; ८७; ९४; २०, १९; २३, ५१[२]; ५२[२]; ६३; २९, १५†; ३१, १९; ३२, ४; †३३, ८५; ९०; ३४, २; ३; ३७, १७†; ४०, ५; का २, ३, ५; ३, १, ७†; ४, ५, ४; ९, ४, ३; ५, ३; १०, २, ३†; ११, ४, ३; १२, ३, ४; १३, १, २†[m]; ७†[j]; १२[n]; १६[o]; १७; †२,

३; ४; ३, ४†; १०; १४, ४, १†; १८, ६, ६†; †१९, १, ७; १२[२]; २१, १, २†[g]; ६, ८; १५; २२, १, ४; २५, ९, ७[२]; ८[२]; १०, ११; ३१, ३, ४†; ३५, २, ३; ३, ४; ३७, ३, ४†; ४०, १, ५; तै १, ३, †१४, २[j]; ७; ४, ४५, २; ५, ३, १†; ७, ७, २†, ८, १२, २; २२, ५†; २, १, ११, ५†; ४, १३, १¶; ५, २, ३¶; ४, १, ३, २; ९, ३[२०]; १०, ५; २, १, २†; ४; ५†; †२, १; २; ३, ३; ९, ६†; ३, ११, १[p]; ६, ५, २; ७, २†; ७, १२, ३; १३, २[q]; ५, ७, ९, १; ६, १,

[a]) =सपा. ऐआ २,१,१ माश २,५, १, ५ । शौ १०, ८,३;४० विभे. ।

[b]) अन्तर् आ>सपा. मा १९, ४१ प्रमृ. कापा ९४ : ९ तैब्रा १, ४, ८, २ ? अन्तरा ⌊सस्थ. ϕआवि-ततम् टि. द्र.⌋ इति, लाश्रौ ५, ४, १४ अन्तरम् इति पाभे. ।

[c]) सप्तम्यर्थोपबृंहणः कप्र. (वैतु. PW. GW. MW. अन्तरादधे इति स्वरतोऽनिष्टमर्थतोऽसंगतं च ब्रुवन्तः) ।

[d]) अव्य. क्रिवि. (वैतु. GW. MW. च अन्तर् √आस्>अन्तः···आसीनाः इति) । अप्सरसां सोमाभिमुख्येन क्षरणे तदीयस्य मध्यवर्त्तित्वस्य तन्मुख्यसाधकत्वेन शिश्राविषयितत्वान् मध्यात्मकस्या-ऽर्थस्य प्राधान्येनैव श्रुतिरुपयुज्येतेति (तु. सस्थ. टि. अभि) ।

[e]) अन्तर् ऋषयः > सपा. कौ २, २३६ अन्त-रिक्षात् इति पाभे. ? तुरीयपादे ये इति पदश्रुतेस्तु कौ. पाठः शोध्यः द्र. (तु. ORN.) ।

[f]) तु. टि. ऋ १,१३२,३ (तु. सा. PW.; वैतु. GW. अन्तः पश्यन् इति विफलद्वैस्वर्यानुमानः) ।

[g]) तु. सस्थ. टि. आ ।

[h]) सप्तम्यर्थोपबृंहणः कप्र. (वैतु. GW. अन्तर्येमे इति) ।

[i]) तु. टि. अन्तर् ऋ ३, ४४, ३ ।

[j]) आधेयप्रधानम् अव्य. (तु. माश ६, ७, ३, २ प्रमृ. PW.; वैतु. GW. अन्तर्-आ√भा इति द्व्युप-सृष्टयभिमानः) । इह आ√भा सकर्मकः (तु. ऋ १, ४९,४; २,४,६; ३,२५,३; ४४,४ प्रमृ. माश. उद्गी. वें. ; वैतु. भा. सा. उ. म. च) ।

[k]) नापू. टि. दिशा. अव्य. (तु. सा. PW.; वैतु. GW. अन्तः···नि···सीदत् इति) ।

[l]) आनञ्ज इत्याख्यातिकं योगं मन्यमानाः PW. प्रमृ. चिन्त्याः (तु. सपा. तै ३,३,१०,२ यत्र तदेवाऽऽख्या-तमनुपसृष्टं कियताचित् पाभे. अन्वितं भवति) ।

[m]) तु. टि. अन्तर् ऋ १, ९६, ५ ।

[n]) अन्तर्भावुकस्य चाऽन्तर्भाव्यस्य च सत्तयोः पृथक् सत्योरेवाऽन्तर्वर्तित्वमात्रस्य विवक्षितत्वादुत्तरेण अभूः इति क्रिप. गस. न भवति (इह तु. टि. ऋ ७, ९६, २) ।

[o]) सप्तम्यर्थोपबृंहणः कप्र. ।

[p]) =सपा. आपमं २, २०, ३० शांगृ ३, १२, ३ । अन्तर् अस्याम्>शौ ३,१०,४;८, ९,११ आस्वितरासु इति पाभे. ।

[q]) सपा. मा १८, ५५ का २०, ३, ५ अप्सु इति पाभे. ।

२, १¶; ६, ३,४[a]; ७, ५, ८, १¶; मै १, ३, ३९; ६, १[a];†; १२¶; †११, १;६; २, १, ९; १२¶; ४, ३[a]¶; ६, ८; ७, ३; ८[a];†[a]; ९; १०; १७; १२, ३[a]; १३, ५†; १०[b/c]; १३[a]; ¶३, २,१[a]; †[a]; ६,६[a]; ८, ३; ८[a]; ११, ७†[d]; ४, ५, ८¶; ९; ६, ५[a]¶; ८, ५; ९, ६†; १२?[e]; १०, ४†; ११, २†; १२, ५†; १३, ४; १४, ५†; ९; १४†; १६†; काठ २, १४; ४, १३; ५,३; ७, १२; १३†; ८, १७; ११, ६; १२; १३; १३, १४†; १४, ६†; १५, ६; १६, ३; ८[a];†[a]; ९; १०†; १६;२१; १८, ४; १५[f/a]; १९, ४; २८, १?[g]; २९,३[a]; ३१, १४; ३५, ३‡[h]; ४; ७; ३६, १५; ३७, ९; १४; १८†[d]; ३८, ३[a]; ५[a]; †३९, १०[c]; ११; ४०,३[a];६†; ७[a]†; क ३, ११; ६,२; ४†; ९¶; २५, १; २९, ४; ३०, २; ४८,४†; ५; ९; †कौ १, ४१७; ५१२[d]; ५८५; २, २९५; ५५०; ५५२; ६१९; ६५४; ६६३[d]; ७२१; ७२७; ३, ४, १; ५, ५; †जै १, ४०, ९; ५३, २[d]; ५९, ८; २, २,९; ६, ४; ३, २४, ११; ४०, २; ४३, ६; ८; ५०, ६; ५४, ४[d]; ५५, ४; ५९, १३; १९; ४, १६,३; ५; शौ १, २, ४[i]; ४, ४; ६,२†; १३, ३; ३०,३;२,१०, ५; ३१,५; ३२, १; ३, ६, ३; १०, ४; २०, ८‡[j]; २१, १; २[a]; ७[a]; २२, ३; ४,८,७; १०, ७[b]; ११, ३[b]; २६, ५; २८, ५; ३०, ७†; ५, ११, ८; ९; ३०, १९[k]; ६, १, २; ३१, २†; ७३, २; ८०, ३; ८७, १[l]; १३२, १–५; ७, ३७, १[m]; ४४,१; ९२, १; ८, १, ११; ४, ३†; ९, ११; ९, ३, ६; २२; १३, ७; ९; १४, ९[b]; १५,१०; ११; १२†; १०, २, ७; ५, १५–२१; ७, १०; ८, १३[b]; २८; १०, २५; २८[n]; ११, २, ११; २४; ६, २०[o]; ७, ३[p]; ९, १; ६; १०, २;६; १२, १, १९; ३७; ६०; २, ३३; १३, १, १; २; ४०[o]; २, ३०; ३, १५; २०; १४, १, ३७; १७, १, ८; १३;

[a]) पाभे. अन्तर् तै ४, ७, १३, २ द्र. ।

[b]) सप्तम्यर्थोपबृंहणः कप्र. ।

[c]) सपा. अप्स्वन्तर् ( मै. पै. ) <>आस्वन्तर् (काठ. ⌊वैतु. BC. अप्स्वन्तर् इति⌋)<> शौ ३, १०, ४; ८, ९, ११ आस्वितरासु इति पाभे. ।

[d]) तु. टि. आ ऋ ९,१०७,१ ।

[e]) तु. संटि. यत्र मै. तैआ. च मूको. विकृतं परिच्छिन्नं भवति । इह मो ष्वस्त्यमस्माँस्तमस्यन्तराधाद् [ =मा । उ । श्वस्त्यं (श्वस्त्वं वा ⌊तु. संटि. पपा.⌋) । अस्मान् । तमसि । अन्तः । आधात् इति पदानि] इत्येवं मूलतः सतस्त्रैष्टुभस्य पादस्य भूयानयं स्वरूपतिरोधायको विकारः द्र. ।

[f]) समुद्रे···अन्तः इति संबन्धः (तु. मा १८, ५५; वैतु. SI. अन्तः···देहि इति नितरामुपेक्ष्यः) ।

[g]) पाठ.? तु. क. ४४,१ (तु. संटि. च), मै ४,६,६ यदनु अन्तम् इत्येव प्राकरणिकमाभाति न यनि. ।

[h]) सप्तम्यर्थे कप्र. । सपा. ऋ २, ३५,१३ विभे. ।

[i]) इह द्वि. =ष., तदभिसंबद्धश्च कप्र. ( =मध्ये, ⌊तु. सा.⌋) । यत्तु W. MW. अन्तस्तिष्ठति इति योगमाहतुः, तन्न । ऐकपद्ये यथा-योगं तिङ्-निघाताभावे गतीमितस्यास्य निघातप्रसङ्गात् (पा ८, १, ३६; ७१) । न चात्र पराभिमतस्तिरोधापनार्थः संगच्छेत । मध्यवर्तित्वस्य शक्यमात्रस्याऽर्थस्य प्राकरणिकत्वादुपपत्तेः । सपा. पै २०,३३,६ अन्तरा इति पाभे. ।

[j]) सपा. ऋ ९, ११०, ९ कौ २,८४६ जै ३, ५८, २ मज्मना इति, मा ९,२४ का १०,५,३ तै १, ७, १०,१ काठ १४,१ माश ५, २, २, ६ सम्राट् इति, मा ९,२५ का १०,५,२ तै १,७,१०,१ मै १,११,४ काठ १४,२ माश ५,२,२,७ सर्वतः इति पाभे. ।

[k]) आधिकरणिकवृत्ति अव्य. (वैतु. WI. अन्तर्वदति इति) । [l]) तु. टि. अन्तर् मा १२,११ ।

[m]) हृदोऽधिकरणत्वस्य प्राधान्यश्रुतेस्तत्प्रत्यायकः कप्र. । स्वानभिमतः पराभिप्रायः द्विउ. टि. दिशा द्र. ।

[n]) सप्तम्यर्थोपबृंहणम् अव्य. (वैतु. WI. अन्तर्-दीव्यति इत्युपसर्गभावमाख्यायुकः) ।

[o]) सप्तम्यर्थोपबृंहणः कप्र. (वैतु. WI. अन्तर् √चर्) ।

[p]) उत्तरेण √कृ इत्यस्य तिङ्वृत्तेन युयोर्भयिषया गतीभावः पराभिमतः (तु. WI.) नेष्टः । गर्भीकरणे न तु गर्भस्याऽन्तःकरणे श्रुतिस्वारस्याऽनुगमात् । पस्थि. वा. क्रिवि. द्र. ।

१८, ४, ८९; १९,३, २; २७, १० ; ४८, १; ७२, १ ; †२०, ३४, ३; १२ $; ४८, ५; ८९ , ८; ९६ , १४; १२६ , १५; १३३ , ६ $; पै १ , ८७,३; १०४,४[a]; १०९, ४‡[b]; २ , १४, १ ; १५ , ५; ३१ , ६ ; ७७, ३ ; ३, ३, ४ ; १२, १[२]; २[२]; ७[२]; १५, ४;१८, ४; २५, ५;३४, ९;४, २, ४; २५, ७; ३६, ४ ; ३७, ३; ५, १०, ९[c]; १५, ३; २२, ३; ६,७,२; ५; १०, ८; १२, ६ ; २१, १; ७, ३, ११[२]; ११, ५†; ८, १, ८; ९; †१३, ६; ११[२]; †१४, १०; ९, १४, ६ ; २५, २; ९; १०, ७ , १०; ९, १[d]; १३, ४ , ४ ; †७ , ३ ; १२ ; १५, १२, ४; १६, २, १ ; ९, ३†; १९, १[२a] ; २२ , १०[e] ; ३९, ६ ; ४१, ४; ६२ , ४[f]; ६६, ९†; ६८, १०†; †६९, १; २; ७४, ७; ९; ७५, २ ; ८२, १; ६ ; ८५, २; ६ ; १०२ , २[c]; १०३, ५; १०५, १; १०६, ४; १०९, ५; ८ ; १२९, १–१०; १५०, ७; १५१,५; १०;१५३, २ ; १५४, ४ ; १७, २, १० ; ४, ७; ६, ९; ८, १; १२, १०; २९, १३–१६ ; ३३ , ४; १८, ४, ६†; १५, १;२; १८, १०; २३, ७; ३१, ३; ३२, १४† ; १९, १, २; ३, ५; ६, ५†;८,२; १०, ११; २९, १३; ३५, ३; ३७, ६; ४४, ३;४५, १२†; ४६, १३ ; २०, ४, २; २०,९;१०;३२,६.

**अन्तः-कोशु**[g]– -शम् शौ १, १४, ४; पै १,१५,४.

**अन्तः √ख्या**[h], **अन्तुः···अुख्यत्** ऋ ५, ३०, ९; **अन्तुः···ख्यः** ऋ १,८१,९; शौ २०,५६,६†.

¶**अन्तः-परिधि**[i]– -धि काठ ३५, १८; क ४८,१६.

*__अन्तः-पर्शु__[g]- > **अन्तःपर्शव्यु**[j]– -व्येन[k] मा ३९, ८ ; का ३९, ६,१.

**अन्तः √पा** ( पाने )

**अन्तः-पेय**[l]– -यम् ऋ १०, १०७,९.

**अन्तः-पात्र**[m]– -त्रे शौ ११, ११, १५ ; पै १७,१२,१.

१**अन्तुः-पार्श्व**[n]– -र्श्वेन तै १,४, ३७,१[k].

---

[a]) पाभे. **अन्तुर्** काठ ३९,१० द्र. ।

[b]) **अस्मास्वन्तः**>सपा. ऋ ६,७४,३ तै १,८, २२,५ मै ४,११,२ काठ ११, १२ **एुतान्यस्मे** इति, शौ ७,४,३, २ **एुतान्यस्मत्** इति पाभे. ।

[c]) **सप्तम्यर्थोपबृंहणः** कप्र. ।

[d]) तु. टि. **अन्तुर्** शौ ५,३०,१६ ।

[e]) तु. टि. **अन्तुर्** शौ ११,६,२० ।

[f]) सपा. शौ १०,२, ३२ **यक्ष्मम्** इति पाभे. ।

[g]) मको. कस. सास्व. (पा ६,१,२२३) ।

[h]) गतिरिति **वें.** PW- प्रमृ. ( वैतु. सा. यन्मते अव्य. क्रिवि. इवाऽन्वितम् ) ।

[i]) अस. सास्व. (पा ६, १, २२३ ) । पाप्र. अस्माद् अनदन्तात् अस. यनि. सुबर्हता-चिह्नस्याऽनुपयोगः सुब्-लुगविषयत्वात् । एवं तावदर्धजरतीयत्वमापतेद् अदन्तस्य अस. सुबर्हत्वं स्यान्नाऽपरस्येति । मा भूदेवम् । इह सर्वस्य अस. सुबर्हत्वं समानमास्थाय क्रिवि. अन्वय इति कृत्वा तस्य न. द्वि१ रूपं संपाद्यते । तेन यथायथं सुपोऽम्भावश्च लुक् च (पा २, ४, ८२ उउ.) प्रवर्त्तेते । एस्थि. अपि यदन्तस्यैव अस. तृ. पं. सत. च रूपसंपत्तिर्भवति नापरस्येति तत् प्रागवक्तृप्रवृत्त्यधीनं वाचोयुक्तिवैशिष्टयं यथोपलम्भं निर्देष्टव्यं न पर्यनुयोज्यम् ।

[j]) =[अन्तःस्थित-] पार्श्वास्थि-विशेष- । तात्रजातिकेऽर्थे यः प्र. उसं. (पा ४,२,९४) । तत्स्वरः ।

[k]) सपा. °र्शव्येन (BC. °पार्श्व्येन इति)<>°पार्श्वेन (तैआ ३,२१,१ च) इति पाभे. ।

[l]) =[ सुरायाः ] अन्तःस्थित-रस-, अन्तःपान- । गस. यदन्ते कृत्-स्वरः प्रकृत्या (पा ६, १, १९३ ; २, १३९) ।

[m]) अस. सास्व. । इह तृतीया- (पा २, ४, ८४) इति सप्तम्या अम्भावाऽभावविकल्पो भवतीति विशेषः द्र. । (वैतु. सा. द्वे पदे इति मन्वानः स्वरतश्चिन्त्यः) ।

[n]) यथा **अन्तर्-धा-** प्रमृ. समासेषु **अन्तर्** इत्यस्य निपातभावोऽभिनिष्पन्नतमो भवति तथेहापि भवतीत्यभिसंधाय **अन्तर्गतार्थे** तत्-प्रयोग इति कृत्वा मध्यमपदलोपः प्रास. वा स्यात् तदभिनिर्वृत्तपदार्थान्तरार्थ-प्राधान्ये समानाधिकरणः बस. वा स्यात् । एवं चोभयथा पूप. प्रकृतिस्वरं समानमुपपद्येतेति दिक् ।

२[a]अन्तः-पार्श्व[a]-
अन्तःपाश्र्व्य[b]- -श्र्व्यम् मा ३९, ९; का ३९,७,१.
¶अन्तर्-अग्नि*[a]- -ग्निः काठ ८, ४[c]; क ६,९.
¶अन्तर्-अवचारिन्[d]- -णम् तै ५, ४,३,४.
¶अन्तर्-आत्मन्[a]- -त्मन् मै १, ९,३; काठ ९,११.
¶अन्तर्-आत्म*[a,e]- -त्मम् काठ २८,५; क ४४,५.
¶अन्तर्-आधान[f]- -नाभ्याम् तै ६,५,९,२.
अन्तर्-आभर[g]- -रः ऋ ८, ३२, १२.
ϕअन्तर्-आहित[h]- -तः ऋ ९,७०, ५.
¶अन्तर् √इ, अन्तरेति तै २, ६, ९, ८; ३, १, ७, २[2]; ३[2]; २, ३, ४; ५, १, १०, ४; २, ८, ४; ७, ८,१; २; ६, १, ८, ५; ४, ६, ३; ६, ३,३; मै १, ८, ७[2]; ४, ८,४; काठ ९, २[1]; १४, ९; २०, ४[1]; २३, ९; २५, ९; २९, ३; ३७, ११; क ८,५[2]; ३१, ६[1]; ३६, ६; ४०, २; ४५, ४; अन्तरेति तै ५, ७, ८, १; ६, १, ५, ५; मै १, ११, ९; अन्तरितः तै ३, ५, ९, १; अन्तर्यन्ति तै ६, ४, ११, २; ७, १, ३,१[2];२[1];३; मै १, ७, ४; काठ २७, ९; ३१, १२; क ४७, ११; अन्तर्यन्ति तै ५, ३, १, १; ७, १, ३, १[1]; २[2]; ३; मै ३, ७, १; ४, ५, १; अन्तः ...यन्ति मै ४, ६, ४; अन्तरायन् तै २, ६, ८, ३; ६, ५, ६, ३; मै ३, ३, ४; अन्तरियात तै ५, ६, १०, २; ६, १, ४, ५; ५, ४[2]; मै १, ७, ३[2,j]; ४[j]; ३, ७,२;१०; ४,६, १; काठ ९, १[2,j]; २[j]; २२, ४; २३, ९; २६, ३; २७, ५; २८, ८[k]; क ३६, ६; ४२, ५; ४४, ८; अन्तरियात तै ६, १, ५,४; मै १, ७,३[1]; ४; ३,७,२. अन्तरेष्यामि तै ५, ७,२६, १; मै ३, ७, ८; अन्तरेष्यामि मै ३,७,८.
अन्तर्-अय-, अन्तर्-आय- अन्°.
$अन्तर्-इत,ता- -तम्[1],-ताः का १, ८, ३; तै १, १, ८,१. [°त- अन्°].
अन्तर्-इति[m]- -त्यै मै ३, ७, ८; ८, ८[2,n]; १०,१[2]; ४,३,४. [°ति- अन्°].
अन्तर् √ई[o], †अन्तरीयंत ऋ १, ३५, [९; १६०, १];३, ३,

[a]) मलो. कस. सास्व. (पा ६,१,२२३)।
[b]) =अन्तः-पर्शव्य- टि. द्र.।
[c]) विसर्गरहिते मुपा. शोधोऽपेक्षितः।
[d]) गस. कृत्-स्वरः प्रकृत्या। उप. अव √चर् + ताच्छीलिकः णिनिः प्र.।
[e]) समासान्ते टचि टेर्लोपः अमादेशश्च (पा ५,४,१०८; ६,४,१४४; २,४,८३)।
[f]) विप. ([अन्तःखलीन-] अश्व-)। बस. उप. नाप.।
[g]) विप. (इन्द्र-)। प्रथमम् उप.गस. <आ √भृ इत्यस्मात् कर्तरि अजन्ते थाथादि-स्वरः। ततः यनि. पूप. तस. सास्व. च (तु. सं-भर-; वैतु. पपा. अन्तर-आभर- इति यदनु क्रिवि. पूप. मा भूत् कर्म च पूप. स्यादि- यत्र तु. सजातीयान्तराणि वृष-भर-, वाजं-भर-, सुतं-भर-, सहस्र-भर-, पुष्टि-भर-, हरिं-भर- प्रभृ.)। [यत्]तु वें. सा. एतदनुवादिनौ सन्तावपि उप. आच्छादनार्थे √भृ इतीवाऽऽहतुः, तन्न। अर्थासङ्गतेश्च, ऋ२,९,१ प्रभृ. अन्यत्र तदीयाऽन्यथोक्तेश्च; अन्तरा-भर- इति PW. GW. ORN. प्रभृ. [यत्राऽर्थभेदे सति यनि. अपेक्षयाऽऽडम्बरायितमिव प्रतीयेत]।
[h]) कर्मणि क्ते अनन्तरगति-स्वरः (पा ६, २, ४९)। गतिद्वययोगः द्र. (वैतु. वें. सा. अन्तर्...हितः इति आ...हर्षते इति च; GW. आ...हितः इति, अन्तर् अव्य. इति च)।
[i]) पाभे. अनन्तरित्यै तै ५,२,५,३ द्र.।
[j]) सपा. क ८,४[4];५[2] ? अन्तर्यात इति पाभे.।
[k]) सपा. मै ४,७,४ अपिहन्यात इति पाभे.।
[l]) पाभे. पुरापूनम् टि. द्र.।
[m]) भावे क्तिनि पूप. प्रकृतिस्वरम् (पा ६,२,५०)।
[n]) सपा. काठ. २५,९ अपहत्यै इति पाभे.।
[o]) पाप्र. √ई(गतौ) इति दिवा. आत्म. पृथक् निरदेशि। √इ इति वा स्यात्, तस्यैव श्यनि सार्वधातुके सत्यपि दीर्घः उसं. (पा ७, ४, २५ [तु. WSR.])। √इ इत्यस्य यङ्-वृत्तमिति GW. MW. च, तच्चिन्त्यम्। आद्युदात्तत्वानुपपत्तेः (तु. ऋ १, ३०, १८; १४४,२ [यदपीह कर्मणीति, तदपि तत एव हेतोर्दुर्वचम्];

६; ४,८,४; ९, ८६, ४२; मा ३४, २५; का ३३, १, १९; काठ १२, १५; अन्तः···ईयते ऋ ३,३,२; अन्तः···ईयसे ऋ २,६,७.

अन्तर्-उँष्य– दशन्°.

अन्तर्√गा, †अन्तः···जिगाति ऋ ७,४,१[a]; मै ४,१४,३; काठ ७,१६.

अन्तः···गात्[b] ऋ ३, ३१,२१; ¶अन्तरगाम् मै ४,७,६; काठ ८,१३;२९,७; क ८,१;४५,८.

¶अन्तर्-गो(ष्ठ>)ष्ठा°– -ष्ठासु मै ४,२,११.

अन्तर्-दाव[d]– -वे शौ ६,३२,१; पै १९,११,६.

अन्तर्-देश°– -शाः काठ ३३, ४¶; शौ ८, ८, २२; १०, ६, १९; पै १६, ३१, २; ४४, १; -शात् शौ १५, ५, १; २; ४-१३; -शान् शौ १५, ६, २४; १४, २३; -शेभ्यः शौ ४, ४०, ८; ५, १०, ७; १५,५,१४; १५; पै १७,२२,१.

[°श– स°].

अन्तर्√धा, >दधा, ¶अन्तर्धत्ते तै ३, २, ९, १[?]; २; ५, १, १०, ३; ४, ४, ४; ६, ४, ६, १; २; मै १, ४, ६; ३, २, १; ३, ६; ६, ३; ४, ४,४; ५, ६; काठ १९, ११; २१,७;२६, १०; २७,[?]२; ३२, ५; क ३१, १[?]; ४१, ८; ४२, २; ४७, ८; ¶अन्तः···धत्ते तै ५, ४, ४, ४[२]; काठ २१, ७[?]; ¶अन्तः (धत्ते) तै ५, ४,४,४; काठ २१, ७; ¶अन्तर्दधाति तै २, ६, ५, ३; ३, ५,५, २; ६, ५, ६, ४; मै १, ४, १३; ३, ६, २; ९, ३; १०, १; ४, ६, ९; काठ २६, १; २८, ६; क ४०, ४; ४४, ६; ¶अन्तर्दधाति तै ५, ५, ७, १; मै ३, ८,६; ४, ४, ४; काठ २८, ६; अन्तः···दधाति पै १८, २५, ७[?]; ¶अन्तर्धत्तः काठ २७, ७; ¶अन्तर्दधति मै ३, ६, १; अन्तर्दधे शौ ८, ५, ६; १७, १, २९; पै १६, २७, ६; १८, ३२, १२; अन्तः[२]··· दधे मै १, २, १; ३, ६, ३; काठ २, १; क १, १३; अन्तर्दधामि मा ७, ५; का ७, २, २; मै १, ३, ५; काठ ४, १; क ३, १; अन्तः···दधामि मा ७, ५; का ७, २, २; मै १, ३, ५; काठ ४, १; क ३, १; अन्तः[२]···दधामि तै १, ४, ३, १; ६, ४, ६,२; †अन्तः···दधताम्[h] ऋ १०,१८, ४; मा ३५, १५; का ३५, ४, १६; अन्तर्धेहि शौ ११, १२, ४; अन्तः···धत्तम पै १, १०९, ४[?]; ¶अन्तर्दधाम काठ ७, १०; क ५, ९; ¶अन्तरधत्त तै ६, ४, ६, १; काठ २३, १; क ३५, ७; ⌊अन्तः···अदधात् ऋ ६, ४४, २३; अन्तः··· अदधात् ऋ १०, ५४, ६⌋। ¶अन्तरदधत मै ४, ५, ६; काठ २०, ५[j]; २६, १०; क ४१, ८; ¶अन्तरदधुः काठ

---

१९७, ७; २, ६, ७; प्रभृ.)। यनि. उपसृष्टत्वे सा. त्व् अव्यभिचरिताऽनभिमतिर्विमृश्या भवति। देशमात्रतो मध्यमवत्वेन √इ(ई) इत्यस्यार्थो न विशेष्येत दूत-क्रियाप्रकारकत्वेन चासौ विशेष्येतेतिदर्शनात् तस्य चार्थविशेषस्योपसर्गधर्मिणैव अन्तर् इत्यनेन सुद्योतितत्वाद् यनि. तूपपन्नं द्र.।

[a]) तु. वें. GW; वैतु. सा. गत्यभावः।

[b]) कृष्णान् इत्येतेन पदेनास्याऽऽख्यातस्य शुद्धस्य सतः सकर्मकता द्र. (तु. वें. PW. प्रभृ.; वैतु. सा. णिजर्थमन्तर्भावुकस्वाऽन्तर् इत्येतत् पृथग् अव्य. इतीवाभिधायुकश्च ⌊तदभिमतेऽस्मदनभिमते चाऽन्त-र्धानाऽर्थे तथा अव्य. सतोऽस्य सामर्थ्याभावादित्य-भिसन्धेः⌋)। [c]) विप. (गो-)। बस. पूप. प्रकृतिस्वरम् (पावा २,२,२४; पा ६,२,१)।

[d]) पारे मध्ये (पा २, १, १८) इत्यत्र पूप. इसं. अस. सास्व. (पा ६, १, २२३)। इह तृतीया- (पा २, ४, ८४) इति सप्तम्या अम्भावाऽभावविकल्पो भवति।

[e]) मलो. कस. सास्व. (पा ६,१,२२३)।

[f]) पूर्वेण कुर्वीत इत्याख्यातेन संबन्धमिच्छुः प्राकरणिकम् यनि. योगं तिरस्कुर्वन् SI. उपेक्ष्यः।

[g]) सपा. ऋ ५,२,१ विमे.।

[h]) तु. उद्गी. वें. सा. GW. प्रभृ.। =सपा. माश १३, ८, ४, १२ आगृ ४,६,१०। शौ १२, २, २३ पै १७, ३१, ३ तैबा ३, ७, ११, ३ तैआ ६, १०, २ आपश्रौ ९,१२,४;१४,२१,३ आपमं २,२२,२४ तिरो···दधताम् इति पाभे.।

[i]) सपा. ऋ ६,७४,३ विमे.। [j]) सपा. तै ६,२, १,६ मै ३,२,६ क ३१,७ अपाघ्नत इति पाभे.।

२८, ६; क ४४, ६; ¶अन्तुर्दधीत तै ६,४,९,४; ¶अन्तुर्दध्यात् तै ५, ५, ७, १[a]; काठ ८, १०; २६,१; क ७, ६; ४०,४.

¶अन्तुर्धीयते मै ३,९,४; काठ ३४,५; ¶अन्तर्धीयेत काठ ३५, १६; क ४८,१४.

अन्तर्-दुधान[b]– -नाः शौ ५, २८,८; पै २,५९,६.

अन्तर्-धाँ[c]– -धाः पै १, १०२,३.

अन्तर्-धि[d]– -धिः मै ४, ९, ४; शौ १२, २, ४४; पै १७, ३४,५.

अन्तर्-हित, ता[e]– -¶तः तै ६, १, १, १; मै ३, ६, १; ६[२]; काठ २२, १३; २३, ३[२]; पै १३, १२, ३; ४[२]; ६; –तम् ¶काठ ८, ५; ३५, १६; ¶क ७, १; ४८, १४; शौ १९, ४२, १; पै १३, १२, १; ३; ८; १३; –ताः ¶मै १, ८, ३; १०, १७[२]; ¶काठ ३६, १२[१]; शौ ११,११,१६; पै १३, १२,१;५[२];७[१];८;९[२];१२[१]; १३; –ते पै ८, ९, ५?[f]. [°त– अन्° संवत्सर°].

¶अन्तुर्-हिति[g]– -त्यै तै ५,२, ४, ४; ६,६,३,५; काठ १०,५; २०,५[h]; २३, १; क ३१, ७[h]; ३५, ७. [°ति– अन्°].

¶अन्तुर्-मांस[i]- -से काठ २३,३.

अन्तर् √यम् , >यच्छ् (यमने), अन्तुर्यच्छ ऋ १०,१०२, ३; मा ७, ४; का ७, २, १; तै १, ४, ३,१;२,२, १२,४; मै १, ३,५; काठ ४, १; २७, २; क ३, १; ४२,२.

अन्तर्-याम[j]- -मः मा १३, ५५; १८, १९; का १४, ७, ४; १९, ७, १; तै ४, ३, २, १; ७, ७, १; ¶६, ४, ६, १; ३; मै २, ७, १९;११, ५;¶४, ५, ५;६; ७,१; काठ १६, १९; १८, ११; ¶२७, २[२]; ३; २८, ७¶; क २५, ९; २८, ११; ¶४२, २[२]; ३; ¶४४, ७; –¶मम् मै २,७, १२$; ४,५, ६[२]; काठ २७, १; क ४२, १; –मस्य तै ३, १, ६, २; ६, ४, ६, १¶; –मात् मा १३, ५५; का १४, ७, ४; तै ४, ३, २,१; मै २, ७, १९; काठ १६, १९; क २५, ९; –मे मा ७, ५; का ७, २, २; तै १, ४,३, १; ६, ४, ६, ३; मै १, ३, ५; काठ ४, १; क ३, १; –¶मेण तै ६,४,६,१; क ४१,८;–मेन मै ४,५,६; काठ २६,१०. [°म- २उपांशु°].

¶अन्तर्याम-त्व– -त्वम् तै ६,४,६,१.

¶अन्तर्याम-पात्र[k]– -त्रम् मै ४,८, ८; काठ २७,२[२]; २८, १०[२]; क ४२, २[२]; ४५, १[१]; –त्रेण तै ६, ५, ७, १[१]; मै ४, ७, १; काठ २८, ७[२]; क ४४,७[२].

?¶अन्तर्यात्[l] क ८,४[४];५[१].

¶अन्तुर्-लोम[m]– -मम् मै ३,६,६; काठ २३,३.

अन्तुर्-वत्– -वन्तः मै ४,२,१३¶; –वान् मै ४,२,१¶; शौ ९, ४, ३; पै १६,२४,३.

---

a) सपा. मै ३,४,८ अवगृह्णीयात् इति पाभे. ।

b) गस. शानजन्ते कृत्-स्वरः प्रकृत्या ।

c) गस. कृत्-स्वरः प्रकृत्या (पा ६, २, १३९)। पूप. उपसर्गवद्भावे उप. स्त्रियां भावे अङ् प्र. (पावा १, ४, ६५; पा ३, ३; १०६)। प्र. स्वरः । टापि स्वरेऽविशेषः ।

d) उप. किः प्र. (पा ३,३,९२)। शेषं नापू. टि. द्र.।

e) अन्तर् (पा १, ४, ६५) इति गतित्वे गस. कर्मणि क्तेऽनन्तरगतिस्वरः (पा ६,२,४९)।

f) पाठः? तु. सपा. शौ १९,४२,१ °हितम् इति पाभे.।

g) तु. टि. अन्तुरिति– ।

h) सपा. मै ३,२,६ अपहत्यै इति पाभे. ।

i) विप. (कृष्णाजिन-) बस. पूप. प्रकृतिस्वरम् (पा६,२,१)।

j) =ग्रह-विशेष- [तात्स्थ्यात्] सोमरस- [काठ २७, १]; अवलम्ब-साधन- (क्राम्युपकरण-विशेष- [मै २,७, १२; C. आपश्रौ १६, १८, ४]) । गस. उप. करणाधिकरणयोः घञ् प्र. । थाथादि-स्वरः (पा ६,२,१४४) ।

k) कस. सास्व. (पा ६,१,२२३) ।

l) मूलतः अन्तरियात् इत्यस्य रूपस्य सतः (तु. पाभे. संटि. च) अन्तर्यायात् इत्यस्य वा रूपस्य सतो लिपिविकारमात्रमेतद् इति कृत्वा सुपा. शोधाऽवकाशः। सपा. मै १,७,४ अन्तुरियात् इति पाभे. ।

m) बस. पूप. प्रकृतिस्वरम् । उप. समासान्तस्य अपः प्र. (पा ५,४,११७) पित्वान्निघाते स्वराऽभेदः । अकारान्तं वेह उप. (तु. टि. अज-लोम-) तेन च समासान्ताऽनपेक्षा स्यात् ।

अन्तर्वर्ती[a]– -र्ती काठ ७, १२[b]; ८,१०; क ७,६; -र्तीः ऋ ३,५५,५; १०, ९१,६; कौ २, ११७४; पै १४, १, १७; -र्तीम् काठ ११,२.

अन्तर्वर्त्नी[a]– -र्त्नी मै ४, १, ९.

अन्तर् √वा > ?*अन्तर्-वा- > ?अन्तर्वा-वत्[c]– -वत् ऋ १,४०,७; ६,८,३.

अन्तर् √विद्(ज्ञाने) > अन्तर्-विद्वस्[d]– -द्वान् ऋ १, ७२, ७.

अन्तर् √वृत् > अन्तर्-वर्ति[e]– -र्तेः काठ २५,१०; क ४०, ३; -र्तीन् ते ६,२,१०,७.

अन्तर्-वेदि[f]– -दि ते १, ७, ५, ३; २, ४, ९, २; ५, ११, २; ६, ६, ४, १; ७, ५, ९, ४; मै २, २, १; ३, ८, ९; ९, ४[२g]; ४, १, ९; काठ २८, ६[१]; ३१, ७; ३४, ५; क ४४, ६[१]; ४७,७.

अन्तर्-हस्त[f]– -स्तम् शौ ७, ५२, २[h].

अन्तर्हस्त्य[i]– -स्त्यम् पै १९, ९,९[h].

अन्तश् √चक्ष्[j], अन्तः···चष्टे ऋ १, १९०, ७.

अन्तश् √चर्, अन्तः···चरति ऋ ३, ५५,८.

अन्तश् √छद् > छादि, अन्तश्छादयसि शौ ९, ३, १४; पै १६,

a) स्त्रियां ङीपि (पावा ४, १, ३२) छन्दसि वैकल्पिको नुग्-आगमः (तु. नाउ.)।

b) =सपा. माश्री १,५,२,३ प्रभृ.। तत्रा १, २,१,१३ आपश्री ५,८,६ प्रभृ. अन्तर्वत्नी इति पाभे.।

c) व्यु.? अन्तर्-वावत्– इति पपा.। तेन तत्र गस. उप. प्रकृतिस्वरः अभिप्रेतः स्यादिति कृत्वा उप. <(√वावद् <√वद्) इति वा (तु. सा. ऋ १,४०,७), <(√वावा <√वा) इति वा (तु. स्क. ऋ १,४०,७ सा. ऋ ६,८,३) यङ्लुग्-वृत्तं सद् आद्युदात्तं (पा ६, १, १८९) स्यात्। वस्तुतस्तु अन्तर्वा-वत्– इत्येवं विभक्तुमर्हं सत् पपा. उक्तप्रकारेण विभक्तं स्यादिति सुवचम् (तु. पपा. यातु-मावत्– इति)। अस्मिंश्च यनि. विभागे अन्तर्वा– इति गत्युत्तर-कृत्-स्वरः प्रकृत्या द्वितीये स्थले √वावाद् इत्यस्यार्थसंगतेस्ततो निष्पत्तिर्नाऽऽद्रियेत। एवं √वावा इत्यतोऽपि निष्पन्नस्य सतो ह्रस्वोपधत्वं नोपपद्येतेति कृत्वा मूर्ग्य एव सति मार्गान्तरे विजन्ते इति प्रकृतिस्वरे सति पिन्निहतेन स्वराऽविशेषकेण मतुपा युक्तत्वं द्र. (तु. सा. ऋ १, ४०, ७)। प्रथमस्थलीयं रूपं क्रिवि. द्वितीयस्थलीयं च रूपं तमः इत्येतेत्-समानाधिकरणमिति कृत्वैतत् संगमनीयम्। एतत् प्राति. =अन्तर्-वत्– (यद.) इत्येवं कृत्वा यद् उप. प्रकृत्यंशमन्यथासिद्धयित्वेव क्वचिद् व्याख्यानं कर्तुमिष्टं भवति (तु. ORN.), एवं च यदन्यत्र क्वचिद् (तु. GW. MW. NW.) उप. प्रकृतिप्रत्यययोभयोरेक्षापुरस्सरमिवैतद् अन्तर्– इत्यतो निष्पन्नं सदपि ततोऽभेदेनैव ग्राहयितुमिष्टं भवति, तदरुचिरं भवति। प्रकृतिप्रत्ययोभयसार्थकत्वे सत्येव प्रथमे स्थलेऽन्तःप्रश्वसितगतिमद् यथा स्यात् तथेति कृत्वाऽन्तर्विशालत्वपर्यवसानकस्य स्वारसिकस्यार्थस्य च (तु. PG २, २१४) द्वितीये स्थले तथैवान्तर्भिन्नत्वपरिणाम्यर्थस्य च (तु. गपू.) लाभदर्शनात् (तु. पंजा. वाअंदा– <*वावन्त इति) अप्रतिबद्धः, विशालः, असंहत इत्याद्यर्थ इति दिङ्मात्रमिह समकेति। विस्तरस्तु वैश. द्र.।

d) गस. कृत्-स्वरः प्रकृत्या (तु. वें.)। यत्तु सा. पूप. 'द्यावापृथिव्योर्मध्ये' इत्येवं व्याचक्षाणः समासं विभजतीव, तच्चिन्त्यम्। उप. आख्यातांशस्य कर्माभिसंबन्धशैथिल्यप्रसङ्गाद् द्विः अनुपयोगात्।

e) गस. उप. कर्तरि अच् प्र. (पा ३, १, १३४)। अन्तरालच्छिद्रपूरकपदार्थवृत्तित्वं द्र. (तु. सा.; वैतु. भा. अन्तर्वर्तनप्रयोजककर्तृ-वृत्तित्वं पश्यन् णिजन्तात् प्र. इच्छुः, MW. च अन्तर्वर्तनभाववृत्तित्वं पश्यन् घञा प्र. निष्पादुकः। वस्तुतस्तु अन्तरालवर्तिपदार्थोपयोगफलमात्रत्वमस्य पराभिमतस्य भावस्य द्र. [तु. K.])। सर्वथाऽपि थाथादि-स्वरः (पा ६, २, १४४) यथायोगं चरितार्थयितव्य इति (तु. समानार्थं सप्रक्रियं च पंजा. पत्थर [<*अपि-स्तर-])।

f) अस. सास्व. (पा ६,१,२२३)। वा. क्रिवि. द्र.।

g) सकृत् सपा. काठ २६,६ वेद्याम् इति पाभे.।

h) सपा. °हस्तम् <> °हस्त्यम् इति पाभे.।

i) स्वार्थे यत् प्र.।

j) कर्मान्तिकचक्षणमभिप्रेतं स्यादिति कृत्वा गतिभावः (तु. GW.; वैतु. वें. सा. PW. प्रभृ. च चष्ट-स्थित्यभिप्रायतः अव्य. इति)।

४०,१.

¶अन्तः-शर्[a/b]– -राः तै ५, २,६, २; ६,१,६,५.

अन्तः√श्लिष्

अन्तः-श्लेष्[c]– -षः मा १३, २५; १४, ६; १५; १६ ; २७; १५, ५७ ; का १४ , २, ११ ; १५, १, ५;४, ३[२]; ८,५; १६, ७,१; तै ४, ४, ११, १; मै २, ८,१२[२]; ३,२,३; काठ १७,१०[२]; क २६,९[२].

¶अन्तः-श्लेषण[d]– -णम् तै ५, ४,२,१; मै ४,६,५;–णाय काठ २७,१०.

अन्तष्-कोश[*a]– -शः पै २०, २९,४.

¶अन्तः-सद्स[e]– -सात्[f] तै ७, ३, १,३.

अन्तः √स्था,> तिष्ठ, अन्तस्तिष्ठाति[g] शौ ६, ५३, २[h]; अन्तस्तिष्ठासि पै १९, ८, २[h]; अन्तस्तिष्ठतु[i] शौ १,२,४.

‡अन्तस्थुः शौ १३, १, ५९[j]; †अन्तःस्थुः[j] ऋ १०, ५७, १; पै १७,२५,२.

अ(न्-तॅ)न्तर, रा[k]– -रः ऋ १, ३१, १३; ४४, १२; ⌊२, ४१,

[a]) मलो. कस. सास्व. (पा ६, १, २२३ ) ।

[b]) यत्तु भा.<अन्तः√शॄ इच्छति, तन्न । प्रधानखण्डपातनार्थं शरणक्रियायां प्रवृत्तायां मध्येऽनायासेनैव पततां शकलानामभिप्रेतत्वात्ताहगिभश्च तैः शरैर् अन्तर् इत्यस्य साक्षात्संबन्धाभावे सति तेषां पतनक्रियायास्तद् विप. स्यादित्येवं सुवचत्वात् । एस्थि. तस. सति मध्यमपदलोप एव न त्विह गस. कश्चिदप्यवसरः स्यादिति । यदपि BW. प्रभृ. इह २शर्– (यद्र.) इति उप. भवतीत्याहुस्तत्र तेषां प्रकरणाऽनवबोधजनितो भ्रम एव बीजम् ।

[c]) गस. भावे घञन्ते थाथादि-स्वरः । यत्तु उ. तस. इति कृत्वा उप. <कर्तरि√श्लिष् इत्याह, यच्च म. एतदनुविवदिषन्नापि उप. कर्मणि प्र. इति सा. भाष्यांशमनुब्रुवाणः (तु. सा. तै ४, ४, ११, १) व्यामिश्रणामिव करोति, तन्मन्दम् । इह सास्व. इति कृत्वा स्वरोपपत्तौ संभवन्त्यामपि नाउ. समानप्रक्रियत्वेन व्याख्यानार्हं प्राति. तदसंगतेर्दर्शनात् ( तु. नाउ. ) । अर्वाञ्चोऽपीह तस. च गस. च विवेकमकुर्वाणाः समानं चोद्याः स्युः ।

[d]) गस. ल्युडन्ते कृत्-स्वरः प्रकृत्या (पा ६, १, १९३ ; २, १३९) । यत्तु भा. बस. इतीव कृत्वा व्याचष्टे, तन्नाऽऽद्रियेत । पूप. प्रकृतिस्वरस्य दुर्वारत्वप्रसङ्गात् (तु. नापू.) ।

[e]) अस. समासान्तः टच् प्र. बसं. (पा ५,४,१०७) । चित्स्वरः ।

[f]) नाव्ययीभावात् (पा २, ४, ८३) इति सुब्लुगभावः पं. अमादेशाऽभावश्च । विविच्यमानस्य शब्दस्याऽपक्रमणक्रियामपेक्ष्याऽपादानकारकसामान्ये पं. द्र. (तु. पाम.; वैतु. भा. यन्मते ल्यब्लोपे कर्मणि पं. भवति) ।

[g]) नः ( अस्माकम् ) अन्तर् इति संबन्धमास्थायाऽसंबद्धे इवाऽऽपद्यमाने दुरितानि विश्वा इति पदे 'विनाशयन्' इत्यस्या आक्षिप्तायाः क्रियायाः कर्मीभावयन् सा. चिन्त्यः । परिग्रहणार्थान्तरभूते तिरोधापनार्थे अन्तर् इत्यस्य गतिभावस्य (पा १, ४, ६५) प्रागनुमतत्वात् ।

[h]) सपा. परस्परं पाभे.; शौ १२, २, २८ अतिक्रामन्तः इति, पै १३,९,१२ अपतिष्ठान् इति च पाभे. ।

[i]) रोगस्य चाऽऽस्रावस्य चोभयस्याऽधःकारकत्वेन मुञ्जस्य तन्मध्यवर्तिनी स्थितिराशंसिता भवतीति यत् सा. आचष्टे, तन्न । मध्यवर्तिनो मध्यवर्त्तयितव्ययोः परस्पर-संसर्गबाधकरत्वेनैवोपयोग-परिसमाप्तिदर्शनात्तदुभयाधः-कारकत्वेनोपयोगासंभवात् । न चेह मुञ्जस्योक्तचरी रोगसामान्यविशेषमध्याऽत्रस्थितिराशंसिता भवत्य् अपि तु तदुभयञ्चान्यतः स्तोतॄंश्चान्यतोऽपेक्ष्य मध्येऽत्रस्थानमभीष्टं भवति येन मुञ्जप्रभावात् स्तोतॄनपेक्ष्य रोगस्य चाऽऽस्रावस्य च तिरोधापनं संसिध्येत् । एस्थि. 'अस्माकं स्तोतॄणां दृशो रोगं चाऽऽस्रावं चाऽन्तःस्थाय तिरोधापय' इति तात्पर्यं द्र. । ततः अन्तर् इत्यस्य गतिभावश्चेति दिक् (तु. w.) ।

[j]) अत्र नः इति द्वि३ न तु ष३ (वैतु. सा.) । तु. टि. अन्तस्तिष्ठाति ।

[k]) २*अन्+आतिशायनिकः तरप् (=२*अन् ⌊गत⌋ तरइत्येवं मध्यमपदलोप इव द्र.) । प्र. च पिन्निहतत्वं द्र. (व्यु. तु. *अव-तर–, उत्-तर–, *प्र-तर–, *वि-तर–) । यत्तु GW. अन्त-+(तरप् >)र इत्येवं व्यु. आह, तच्चिन्त्यम् । तत्र तत्र श्रुतौ तेनोपदिदर्शयिषितस्यान्तगतत्वपरिणत-समीपवर्तित्वस्वरूपस्याऽर्थस्याऽपेक्षयाऽन्तरङ्गभावाऽनुरञ्जितस्याऽर्थस्य प्राकरणिकतरत्वेन प्रतीतेरिति यावत् । वा. विप. द्र. ।

३; अप···द्राहि पै १९,१३,९.

?‡अपद्राः[a]

अप√द्रु, अपाद्रवत् मै ३,८,६.

अप√धम्, अप···धमन्तु[b] पै १३, १,१.

अप√धा, अपधामसि पै ७,७,७. †अप···दधातु ऋ १०, १६४, ३; शौ ६, ४५,२; पै १९, ३६, ५; अप (धत्स्व) पै १०,४,५; †अप···अधत्त[a] ऋ ८,९६,१३; शौ २०, १३७, ७; ‡अप··· अदध्राम्[a] काठ २८, ४; क ४४,४. अप···धायि ऋ [४, २८, २; ६,२०,५]. ¶अपधापयते मै ४, २,७. अपधित्सामि[c] पै १६, ५०,७.

†अप-धा[d]– -धा ऋ २, १२,३; मै ४,१४,५; शौ २०, ३४, ३; पै १३.७,१.

अप√धाव्, अपधावत शौ ४, ३७, १२[e]; ¶अपाधावन् मै ३,८,३.

? अपधुः[f] पै १,९८,२.

अप√ध्मा>धम्, अपधमन्ति ऋ ९, ७३, ५; अप···धमन्तु पै १३, १, १; †अपाधमत् ऋ ८, ८९, २; मा ३३, ९५; अप··· अधमः ऋ १,५१,५.

अप√ध्वंस्>अप-ध्वंस[g]– -सेन शौ ४,३,५.

---

[a]) वें. सा. अधत्त इति पाठं संश्राव्याऽर्थतोऽभिन्नं सन्तं सपा. कौ १, ३२३ अधद्राः इति पाभे. वर्णविकारमात्रतयैव समादधाते । कौ. (तु. कासंग्र.) तु सा. अपद्राः इति पाभे. उपश्रावयमाणः अप√द्रा इत्यस्य तिङ्वृत्ततया व्याचिख्यासुर्भवति । तदेवं शाखाभेदेन व्यवस्था द्र. । तथा हि । बाह्वृच-भाष्ये संकेत्यमाना छान्दोगी शाखा कौ. अपरा सती भिन्नपाठवती बभूवेति स्यात् । एवमपीहायमन्तः-सामुपलभ्यमानः पाभे. एतज् ज्ञापयितुमलं स्याद् यथा अध । द्राः इत्येवं वा अप । द्राः इत्येवं वा मूलतः पदद्वयात्मके सामवेदिनां पाभे. सति द्राः इति द्वितीयं पदं द्रा- (<√द्रा) स्यादिति । एस्थि. च यत् सा. अधद्राः इत्यमुं पाभे. बाह्वृचेन पाभे. संमेलयितु-काम इव √धा इत्यस्यैव किञ्चित्तिङ्वृत्तविशेषतया प्रति-पिपादयिषति तन्निर्मूलं द्र. । अथ वाक्यान्वये तावदयम-परो विवेकः द्र. । यथा बाह्वृचे तुरीये पादे अप··· अधत्त इत्येषा श्रुता सती क्रिया वाक्यकरी भवति । कौ. तु अप इत्युपसर्गश्रुतिबलेनोन्नीयमानाऽऽक्षेपाही तत्-पूर्वा चकार इत्येषेति च । बाह्वृचे वाक्ये स्नेहि-तिम् इत्येकं कर्म कौ. तु तच्च द्राः चेति द्वे । अथ काठ. क. च अदध्राम् इति पाभे. भवति । स च बाह्वृचस्य पाभे. नेदीयानिति कृत्वा √धा इत्यस्य रेफोपजनाऽऽदिमत्तिङ्वृत्तविशेषः स्यादिति वा कौ. पाभे. अपि नेदीयानिति कृत्वा अधद्राम् > अदध्राम् इत्येवं माध्यमिकवर्णव्यत्यासमात्रं वेति समानं सूहं सद् विमृश्यं द्र. । कौ. अधद्राः इति पाभे. अपि क्वचित् संहितायां श्राव्यते (तु. सं. BI. BS. Wil.) । यस्त्वमुं पाभे. तदीयम् अधत् । राः इति पपा. चोपजीव्य LR. राद् (<राज्-) इत्यस्य सतोऽन्त्यविकारतया द्वितीयं राः इति पदं प्रतिपद्यते तत्तथा स्यान्न वा स्यादिति । कथमुत्तरः कल्प इति । अधत् (>द्) द्राः इत्येवं मूलतः सति माध्यमिकं दकारद्वयम् अनचि च (पा ८, ४, ४७) इत्यनुशासनीय-त्वाद् वैकल्पिकमितीवाभिसंधायैकदकारवत्तया श्रुति-प्रवृत्त्युपागमस्यापि संभवादिति । एवमप्युत्तरे कल्पे प्रथमं पदम् अधत् (<√धा) इति स्यान्न अध् इति तु वचः सावकाशीभवत् पुनरपि भूयोविमृश्यत्वमस्य विषयस्य प्रख्यापयेदित्यलम् ।

[b]) सपा. शौ ५,२२,१ अप···भवन्तु इति पाभे. ।

[c]) सपा. शौ ६,११९,३ अप···सुवामि इति पाभे. ।

[d]) स्त्रियां टाबुत्तरः भावे अङ् प्र. (पा ३,३,१०६) तत्-स्वरश्च । तृ१ आ प्र. द्र. (तु. PW. GW. GG. ; वैतु. सा. यस्यैतत् पं१ स्यात्; अप-धि–> -धा [स१] इति ORN. NW.) । ऐतिहासिकं पक्षमवलम्बमानस्य सा. वलो नाम कश्चिद् गवां निरोद्धाऽसुरो भवतीति कृत्वाऽयं शब्दस् तत्-कर्तृकनिरोधमाह पं. विभक्तिश् चेन्द्रकर्तृका योदजनक्रिया भवति तस्या अपादानत्वमात्रमाह । वस्तुतस्तु √वृ (बधा.) इत्यस्मात् सतः > वल- इत्यस्य निरोधमात्रस्वरूपत्वात् तन्निवारणमात्रफलस्वरूपत्वाच्चाऽब्-लक्षणानां गवामुदजनस्य 'इन्द्रो वलस्य निवारणेन गा उदाजत्' इत्यर्थाद् हेतौ सुब् द्र. । एस्थि. इह तृ१ भवति न च पं१ । उत्तरस्यां विभ. आ प्र. अप्रसिद्धेरिति यावत् ।

[e]) पाभे. अपक्रामत पै १३,४,१२ द्र. ।

[f]) पाठः? अ-बन्धुः इति शोधः (तु. सस्थ. टि. २जन- >-नम्) ।

[g]) गस. घञन्ते थाथादि-स्वरः (पा ६,२,१४४) ।

¶अप-ध्वंसमान- -नम् काठ ९, ११.

अप√नम्, अप···अनमत् ऋ ६, १७,९.

अप-नत- उदीचीन°.

अप√नश् (अदर्शने), अप···नशिष्यति पै १९, ४१,१६;४२,१.

¶अप-नाभि[a]- -भिम् तै ५,२,८,७.

अप-नि√धा, अप···निदध्मसि शौ ३,२३,१; ८,१, २१; १४, २, ६९; पै२,८१,१;१६,२,११;५२, १;१९,३०,३; अप (निदध्मसि) शौ ८,१,२१; पै १६, २, ११; ५२,.१; १९, ३०, ३; अप··· निधत्तन पै १८, १३, ९; ¶अपन्यधत्त काठ २९,७[1]; क ४५,८[1]; ¶अपन्यदधाताम् काठ २४,७; क ३७,८.

अपनि-धाय तै ६, १,३,१.

अप-नि√(स>)षद् > ¶अपनिषादु(क>)का[b]- -काः मै ४, २,१४.

अप√नी, अपनयामसि पै १,२६,४.

‡अप-नी(त>)ता- -ता[c] शौ ५, १७,६; पै ९, १५,६.

अप√नुद्, ¶अपनुदते तै १,७,४, २; २, ४, १, ४; ५, ७, ३, १; ६, ४, १०, २; मै ४, ६, ३; काठ ६, ४; १०, ७; २०, ६; २१,२[d]; ४; २२, १०; २५, ७, २८, १; ३१, ११; क ४, ३; ३१, ८; १७[d]; १९; ३५, ४; ३९, ५[e]; ४४, १; ४७, ११; ¶अपनुदति तै ५, १, ८, ६; अप···नुदे पै १९, २३, ४; अपनुदामः शौ १०, १,१;२; पै १६, ३५, १; अपनुदताम्[f] मा २,१५[1]; का २, ४,१[1]; अप··· नुदताम् मै १, ५, १; अप-···नुदेताम् काठ ३१, १४; ‡अप···नुदन्ताम्[g] मा २८, १३; का ३०, २, २; अप··· नुदन्तु शौ १२,३,४९; पै १७ ४०,९; †अप···नुदस्व ऋ ३, ४७,२; ६, २१,७; १०, १३१, १; मा ७, ३७; का ७, २०, १; तै १, ४, ४२, १; मै १,३ २३; शौ २०, १२५, १; †अप (नुदस्व)[1] ऋ १०, १३१, १; शौ २०, १२५,१; पै १९, १६, ८; अप···नुद मै १, २, ९; ३, ८, ७¶; ¶अपानुदत तै ६, २,७,५; काठ ८,४; २७, ८; क ६,९; अपानुदत पै १, ७१, २; ¶अपानुदन्त तै १, ७,४,२; २, ४,१, २; ३; ५, ७,३,१; ६,३, १, ४; ४,१०,४;६,४, ४; मै १, ९,८; ३, ६, १०;८,१०[2]; काठ १०,७[2]; अपनुदन्त ऋ १,१६७, ४; †अपानुदः ऋ १०, १८०, ३; तै १, ६, १२, ४; काठ ८, १६; शौ ७,८९,२; पै १,७७,१. ?अपनुधातु[h] पै ७,८,१.

अप-नुत्त[i]- -त्तः पै १६, १३१, १-१०; -त्ता काठ ४, ४; २७, ८; क ३, ३; -त्तौ तै ६, ४, १०, २¶; मै १, ३, १२; ४, ६, ३.

¶*अप-नुत्ति[j]- -त्त्यै काठ ८, ४; २७, ८; क ६, ९. [°त्ति- भ्रातृव्य°].

अप-नुदत्- -दन् पै १९,३२,१२.

¶अप-नुद्य तै ६, ४, १०, २; मै ४,६,३.

¶अप-नोद[k]- -देन मै ४,६, ३.

*अ-पन्न[l]- > अपन्न-गृह[m]- -हस्य मा ६,२४; का ६, ६, २; तै १, १, १३, ३; ३, १२, १; मै १, ३, १; काठ ३, ९; क २,१६.

¶अपन्न-दत्[n]- -दन् मै ३, ९, ५.

---

[a]) बस. (पावा २,२,२४) पूप. प्रकृतिस्वरम् ।

[b]) विप. (गो-) । गस. उप. कर्तरि उकञ् प्र. कृत्-स्वरश्च प्रकृत्या (पा ३,२,१५४; ६, १,१९७;२,१३९) ।

[c]) सपा. ऋ १०,१०९,४ उपनीता इति पाभे. ।

[d]) सपा. मै ३,२,१० प्रणुदते इति पाभे. ।

[e]) पाभे. अपतरम् मै ३,८,६ द्र. ।

[f]) =सपा. माश १,८,३,१ । शांश्रौ ४,९,५ अपनुदन्तु इति पाभे. ।

[g]) सपा. ऋ ६, २८, ४ अश्नुते इति, मै ४, १३,८ काठ १९, १३ मा···प्रणक् इति, तैब्रा ३, ६, १३, १ मा···पृणक् इति, खि ५,७,३,२? प्रणक् इति च पाभे. ।

[h]) उपनधातु इति मूको. पाठः? यनि. वाऽन्यथा वा शोधः ।

[i]) निष्ठा-तकारस्य वैकल्पिको नकारादेशाऽभावः (पा ८, २, ५६) ।

[j]) अभिवृत्ति- टि. द्र. ।

[k]) गप. घञन्ते थाथादि-स्वरः (पा ६,२,१४४) ।

[l]) तस. नञ्-स्वरः । उप. <√पद् इति ।

[m]) विप. (अग्नि-) । बस. पूप. प्रकृतिस्वरम् ।

[n]) विप. (पशु-) । उप. व्यु.? तु. टि. दत्- । पाप्र. दन्त> दत् इति समासान्तः (पा ५,४,१४२) ।

¶अपन्नदती[a]- -ती तै २, १, २, ७; मै २, ५, २; काठ १२, १३.

अप √पत्, >पाति, ? अपपपात[b] पै ५,३६,५; अप'''पप्तन् पै २०, ५९,२.

अपपातय पै ४, १३, ५; अप-(पातय) शौ १९,५०,५; पै १४, ४,१५[c].

अप √पद्, अपपद्यते शौ ४, २८,५; पै ४,३७,३;५,२२,३.

अप-परे(रा √इ), अप'''परेत्[d] ऋ १०,६१,८.

¶अप√पश्, अपापश्यन्[e] मै १,१०, १६.

अपपापम्[f]- -पम् शौ १९, ८, ५; पै २०,४६,२.

अपपित्व[g]- -त्वम् ऋ ३,५३,२४.

अ-पपिवस्[h]- -पुषः शौ ६,१३९,४.

अप √पू, अप'''अपुनत पै ५, १९,७.

अप √पृ >पर्, अपपर्षि ऋ १,१२९, ५.

अप-प्र √गा, अपप्रगाः पै ५, ३६, ४;८.

अप-प्र √वह् (वहने), अप'''प्र''' वहन्तु शौ १०, ५,२४; पै १६, १३०, २; अप(प्र'''वहन्तु) शौ १६, १, १०; (अप)प्र'''वहन्तु शौ १६,१,११[2];(अप)प्र(वहन्तु) शौ १०, ५,२४[1]; पै १६,१३०, २[2].

अप-प्रा(ण>)णा[i]- -णाः तै ५,३, ६,२¶.

अप √प्रुथ्, †अपप्रोथ[j] ऋ ६, ४७, ३०; मा २९,५६; तै ४, ६, ६, ७; मै ३,१६, ३; काठ ४६, १; पै १५,११,१०.

अप-प्रोथत्[k]- -थन्तः ऋ ९, ९८, ११.

अप-प्रे(प्र √इ), अप'''प्रेयात् ऋ १०, ११७,४.

¶अप √प्लु >प्लावि, अपप्लावयति तै ६,४,३,४; मै ४, ५, २[2]; अप (प्लावयति) तै १,३,१३,२¶[l].

¶अप-बर्हिस्[l,m]- -र्हिषः तै ६,६,३, २; मै १, १०, १८; ४, ८, ५; काठ २९,३; ३६,१२; -र्हिषम् काठ २५,१०; २६, ५; क ४०, ३; ४१, ३; -र्हिषौ तै ६, ६, ३, ३.

अप √बाध्, >बाधि, अपबाधते[n] पै २,११, ३; †अप'''बाधते ऋ १,३५,९; मा ३४,२५; का ३३, १, १९; अप'''बाधन्ते ऋ १, ८५,३; अपबाधे पै ५, २०,१; अपबाधताम् ऋ ७, ५०, २; १०, ३५, ३; मै १, २, ३; शौ ५, २२, १; पै १, ४६, ५; ७, ५,१२; १३,१,१; २०, ४२,१; †अपबाधस्व ऋ १०, ४२, ७; मै ४,१४,५; शौ २०, ८९, ७; अप'''बाधस्व ऋ ६, ६, ६; पै ७, १९, २; अपबाधध्वम् ऋ ७,५६,२०; ?अपबाधत[o] पै ७, १९, ७; अपबाधाम पै ५, ४,

---

a) स्त्रियां ङीपः (पा ४, १, ६) पित्त्वान्निघाते स्वरेऽभेदः।

b) मूको. '(अ)पपापाथ<(अ)प-पपाथ' (? <त) इति पाठः प्रतीयते। तथात्वे √पत् इत्यस्य छान्दसीम् अनिट्ताम् आश्रित्य तल्लिटि मपु१ स्यात्। संदिग्धस्थलीयत्वाद् भूयसी विमर्शापेक्षापीह द्र.।

c) पूर्वमन्त्रत आख्यातपूर्त्तिः द्र.।

d) आ इत्यस्य पुरा इत्यस्य च गत्यर्थेन धा. प्रातियोगिकोऽभिसबन्धः श्रुतिप्रसिद्धः (तु. ऋ १, १२३,१२; १६४,३१;१९१,२)। इह अप इति पुरा इत्यस्याऽर्थस्य भूयोऽप्य् उपबृंहणं करोतीति विशेषः (तु. PW. GW; वैतु. वें. यः स्मन् ⌊यद्र.⌋=अस्मत्तः इतीव कृत्वा आ इति पञ्चम्यर्थानुवादी कप्र. इतीवाभिप्रयात्, सा च आ-अप-परे⌊-रा √इ⌋ इति त्र्युपसृष्टः धा. इति ⌊कथं तस्य आ इति पुरा इति चाऽव्यवहितावपि गती युगपत् स्वरभाजौ स्यातामिति कृत्वा त्वसावनुयोक्तव्यः स्यात्⌋)।

e) सपा. काठ ३६,१० अपश्यन् इति पाभे.।

f) पाठः? अप ⌊क्रिउ.⌋, पापुम् इति द्विपदः शोधः (तु. सा. RW. कतिपय मूको. च)। अथवा अप इति वर्जने कप्र. तस्य च च्छान्दसः पापुम् इत्यनेन द्वि. योगः इति च।

g) =अपगमन-। व्यु. कृते तु. टि. २आपित्व-।

h) तस. नञ्-स्वरः। उप. < √पा (पाने) द्र.।

i) बस. (पावा २,२,२४) पूप. प्रकृतिस्वरम्।

j) सपा. शौ ६, १२६, २ पै १५, २०, ३ अपसेध इति पाभे.।

k) गस. शत्रन्ते कृत्-स्वरः प्रकृत्या।

l) तु. तै ६,४,३,४।

m) विप. (प्रयाज-, अनुयाज-, एतद्- ⌊=औदुम्बरी-⌋)।

n) सपा. शौ २,४,३ बाधते इति पाभे.।

o) अपबाधथाः पश्यमानः इत्यस्य मूलतः सतः पाठस्य स्थाने अपबाधता पश्यमानः इति प्रामादिको विभ्रंशः संभाव्यते।

१४‡[a].

अपबाधय शौ १२, १, ४९; पै १७, ५, ७; अपबाधय: पै २०, १८,१.

अप-बाधमान,ना– -†नः ऋ १, ३५, ३φ; ९, ९७, ४३φ; १०, १०३,४; मा १७,३६; का १८, ४,४; तै ४, ६,४,२; मै २,१०, ४; काठ १८,५; क २८, ५; कौ २, १२०२; शौ १२, ३, १५$; १९, १३, ८; पै ७, ४,८; १२, ६, ८$; १५, ११, ४‡[b]; १७, ३७, ५; –ना ऋ ५, ८०, ५φ; ७,७८, २φ; तै ४, ३, ४, २φ; मै ४,१४,६; -φनाः ऋ १,९०, ३; मा १७, ५४; १९, ८४; का १८,५,५; २१, ६,५; तै ४, ६, ३,२; ५,४,६,२; मै २,१०,५; ३,११,९; काठ १८, ३;‖३८,३; क २८,३.

अप √ब्रू, अपब्रवत्[c] शौ ६, ५७, १; अपब्रुवत् पै १९, १०, ३; अपब्रूत पै १९,२३,८.

अपाब्रुवन् मै १,५,१२.

अप √भज्, अपभजन् पै ५, २१, २; अप···भजाम ऋ १०, १०८,९.

अप-भरणी–, अप-भर्तवै, अप-भर्तृ- अप √भृ द्र.

†अप √भिद्, अप···भिन्धि[d] ऋ ८, ४५, ४०; कौ १, १३४; २, ४२०; जै १,१४,१०; ३, ३३, १०; शौ २०,४३,१.

अप √भू, †अप···भवतु ऋ ९, ८५, १; कौ १, ५६१; जै १, ५७, १०; †अपभवन्तु ऋ १०, ६७ ११; शौ २०, ९१, ११; †अप···भवन्तु ऋ १०, १२८, ९; मा ३४, ४६; का ३३, २, ९; तै ४,७,१४,४; काठ ४०, १०; शौ ४, ३५, ७; ५, ३, १०; २२, १$[e]; पै २, ३८, १; ५, ४,१४.

अपभूतु ऋ १, १३१,७[f]; अपभूत ऋ ४, ३५,१; †अपभूतन ऋ ७,५९, १०; तै ४, ३, १३, ५; मै ४, १०, ५; काठ २१, १३; अपाभूत ऋ ४, ३४, ११; †अपभूः ऋ ⌊१०, ११,९[f];१२, ९⌋; शौ १८,१,२५.

¶अप-भूत[g]– -तः तै ३, ४, ८, २;७.

अप-भूति[h]– -तये शौ ५,८,५[i].

अप √(हृ>)भृ, अप···भरताम् ऋ १०,५९, ८–१०; अपाभरत् ऋ १,१६१,१०.

अप-भर(ण>)णी[j]– -णीः[k] तै ४,४,१०,३; काठ ३९, १३.

†अप-भर्तवै[l] ऋ १०,१४, २; मै ४,१४,१६; शौ १८,१,५०.

†अप-भर्तृ[m]– -र्ता ऋ २, ३३,७; पै १५,२०,५.

¶अप √भ्रंश्, अपभ्रंशते, अपाभ्रंशन्त, अपाभ्रंशन्त मै १, ६,९; अप···भ्रंशन्त मै ४, ६, ४; काठ ९,१६.

१अपम[n]– -मस्य ऋ १०,३९,३.

२अप-म[n]– -मा?[o] शौ १०,४, १; पै १६,१५,१.

[a]) सपा. ऋ १०, १२८, ९ अवबाधामहे इति पाभे.।

[b]) सपा. ऋ ६,७५,१४ परिबाधमानः इति पाभे.।

[c]) लेटचू अड्-आगमे (पा ३, ४, ९४) आगमानुदात्तत्वसामान्ये धास्व.। यत्तु सा. उपब्रुवत् इत्येवं पपाठ तच् चिन्त्यम्।

[d]) φअप-साह्वान् टि. द्र.।

[e]) पाभे. अप···धमन्तु पै १३,१,१ द्र.।

[f]) तु. उद्गी. वें. प्रभृ.; वैतु. सा. कृद्-वृत्तमेतदिति भाषमाणः स्वरशास्त्रं चोपेक्षमाणोऽश्रद्धेयः स्यात्।

[g]) अन्तर्भावितण्यर्थतया सकर्मत्वोपाचारादिव कर्मणि निष्ठायामनन्तरगतिस्वरः (पा ६,२,४९)।

[h]) क्तिनि तादौ (पा ६,२,५०) इत्युक्तः स्वरः।

[i]) सपा. पै ७,१८,६ अभिभूतये इति पाभे.।

[j]) = नक्षत्र-विशेष-। गस. ल्युडन्ते कृत्-स्वरः प्रकृत्या। यत्तु कर्तरि ल्युः प्र. ततश्च गौरादित्वाद् ङीष् (पा ४, १, ४१) इति शक. मन्येत, तन्न। अन्तोदात्तत्वप्रसङ्गात्।

[k]) सपा. मै २,१३,२० भरणीः इति पाभे.।

[l]) तवै-प्रत्ययान्तस्य द्वैस्वर्यं भवति (पा ६,२,५१)।)

[m]) गस. तृजन्ते कृत्-स्वरः प्रकृत्या।

[n]) वैयुत्पत्तिको विमर्शः पाठशोधश्च नाउ. टि. द्र.।

[o]) शौ. मूको. तदीये च पपा. अप-मा इत्याकारकः सावग्रहो विभागश्च प्रदर्श्यते। पै.(मूको.) उपमा? इत्याकारकं च शब्दरूपमुपलभ्यते। तत्रैतं कियानपि विमर्शः सावसरः स्यात्। प्रथमं तावद् यनि. भिन्न-संख्ययोर् अवगृहीताऽनवगृहीतयोः प्राति. मध्ये सूक्ष्मेक्षिकया विवेकः द्र.। प्रथमेऽनवगृहीते प्राति. अप इति निपातोऽनुपसर्गोऽगतिसंज्ञो निकर्षसामान्यवाचकः। तस्मात् तात्रभाविकस्य तद्धितस्य सामान्येन शैषिकस्य वा म-प्रत्ययस्योत्पत्तिः।

अप√मा(बधा.), अप···मिमीमहे शौ १८,२,४०.

अप-माय[a] पै ३,३०,६. अप√*मि, !अपमयाः[b] शौ १९, ५७,५.

अप-मित्य, अप-मित्य- अप√मे द्र.

इत्थं निकर्षे भवो निकृष्ट इत्याद्यर्थोऽस्य प्राति. संजायते (तु. उद्गी. वें. सा.)। ननु नाम्नस्तद्धितोत्पत्तिः प्रसिद्धा न निपातमात्रादिति चेद् न । नायं नियमो यत् तद्धितो नाम्न एवाऽऽगच्छति न निपातादिति । तद् यथेहैव समानमनवगृहीता बहवः शब्दा म-प्रत्ययान्ताः भवन्ति । तेषु प्रथम्-, मध्यम्-, परम्-, आदिम्- प्रभृतयो नामभ्यः प्रत्ययोत्पत्त्या संभूताः । अथान्ये अवम्-, अपम्-, उपम्- प्रभृतयो नामेतरेभ्यो निपातेभ्यः प्रत्ययोत्पत्त्या संभूताः । अथापि अधम्- इति शब्दो नामनिपातोभयेतरभूतादव्ययात् अधस् इत्यस्मात् प्रत्ययोत्पत्त्या संभूतः । अत आख्यातविलक्षणत्वे सत्यु आख्यातार्थनिर्भरः सत्वभूतो मूर्तिमानिव भावः संख्याकालाद्यविविक्तः । तस्मात् सामान्येन नामीभूतेभ्यः शब्दरूपेभ्यः क्वचित् क्वचिद् अव्ययात्मकेभ्यः स्वरादिभ्योऽतिविरलतयोपसर्गप्रतिरूपकेभ्यो निपातेभ्योऽभिव्यक्तिं लभमानात् तद्धितोत्पत्तिर् भवतीत्येवं सुवचम् । तादृशश्चार्थो निकर्षप्रकारक इह अप इति निपातगम्य इति कृत्वा तस्मात् तद्धितोत्पत्तिर् निर्बाधा भवेत्। ननु कैश्चिन्नवीनैरभियुक्तैः (तु. PW. GW. MW. प्रभृ.) एवंविधेषु संकेतितचरेषु स्थलेषु निपातेभ्य एभ्य आतिशायनिकस् तमप् प्र. उच्यते स एव स्वीक्रियताम् इति चेत् । सत्यं, शक्नुयाम चेदवश्यं तद् अङ्ग स्वीकुर्याम । का बाधेति चेद्, उच्यते । नेह कोऽपि नवीनानामेव प्रतिभाया अयं प्रकाशो यन्निपातेभ्यः आतिशायनिकः प्र. उच्यते । प्राक्तनैरपि स्वीयया प्रक्रियया सोऽनुमतः । तथाह्य अर्थतो निपातविशेषस्य गतित्वेऽव्यवसिते तादृक्कृतप्रयोगबलेनाऽध्याहृतयोग्यक्रियाया निष्ठान्ताया घ-संज्ञकस्य प्रत्ययस्योत्पत्तेः सुवचत्वसंभवात् । तेन यथा ऋ (१०, ९७, १८) इत्यत्रौषध्यन्तरापेक्षयौषधिविशेषस्य श्रेष्ठत्वापादनार्थम् उत्तमा- इति शब्दः श्रूयते । तत्र 'उद्गततमा उत्तमा' इति मध्यमपदलोपविशिष्टः प्रयोगः द्र.। अनयैव दिशाऽत्र (शौ.) इन्द्रादीनां प्रथमत्वादिविशिष्टेषु त्रिषु रथेषु श्रावितेष्व् अहीनां चतुर्थस्य रथस्य रथान्तरापेक्षया अपगततमस्य भूयस्तमा निकृष्टस्य श्रुतिर्भवति । तत्र प्रकरणतोऽर्थतो हीनताविशेषप्रद्योतनार्थं तमपः सावकाशता भवति । तथा च उत्तम्-शब्दे मध्यमपदस्य गतेत्यस्य लोप उक्त एवमिह तस्य प्रत्ययाद्यक्षरसहितस्य लोपः द्र.। एवम् उपम्- शब्देऽपि समानो न्यायः । नन्वेवं निपातेभ्यः स्वीकृत एवाऽऽतिशायनिकः प्र., किमित्यवोचः स्वीकर्तुं न शक्यत इति चेत् । नैतदुक्तं निपातेभ्य आतिशायनिको न भवतीति । एतदेवोक्तं यत् पूर्वोक्तेषूदाहरणेषु सर्वत्राऽऽतिशायनिक एव प्र. इति या केषांचिदभिरुचिः सा न प्रशस्येति । यत्र यत्राऽऽतिशायनिकः प्र. संगतः स्यात् तत्र तत्रैव स सुवचः । अन्यत्र पूर्वोक्तस् तात्रभविकम् तद्धितो मः प्र. इति । प्राक्तनानां पदकाराणां यशोवर्धिन्येषा विवेकदृष्टिर् भवति यत् ते तमबन्तेषु प्रयोगेष्व् अवगृणह्न्ति नाऽवगृह्णन्ति च तदितरया प्रक्रियाऽवगतेषु प्रयोगेषु । तदवग्रहभावाऽभावाभ्यां शब्दराशिद्वयपार्थक्यं संजायते । तेन ऋ (१०, ३९, ३) इत्यत्राऽऽतिशायनिकार्थस्याऽभावे म-प्रत्ययान्तम् अवग्रहनिरपेक्षम् १अपम्- इति प्राति., शौ. चाऽऽतिशायनिकार्थस्य सद्भावे तमप्- प्रत्ययान्तं सावग्रहं २अप-म्- इति प्राति. द्र. । एवम् १उपम्- इत्यस्य २उप-म्- इत्यतो विवेकः द्र. । अतः शौ. पै. च यमु. W. BW. MW. प्रभृ. च प्रस्तावितः अपमः इत्याकारकः शोध एव सुवचः स्यात् (वैतु. पक्षान्तरे W. अपमा- इति दीर्घान्तस्य रूपस्य क्रियाविशेषणतया निर्वाहं यत् प्रास्तौत् तन् निर्मूलमिव भवति । साक्षाद् रथविशेषणस्यापेक्षितत्वात् मन्त्रपूर्वार्धपठितरथान्तरविशेषणीभूतप्रथमादिशब्दा न्तरसकक्षत्वापादनस्वस्य युक्ततरत्वादित्यर्थः)।

[a]) स्यपि रूपम् (तु. नाउ. टि.)।

[b]) रूपे च धा. च? । रूपम् तावत् । यनि. उत अप-मीय इति । कथमिति । मूको. पगा. सा. च यनि. आहुस्तेन पूर्वः कल्पः । यनि. नापू. मन्त्रे श्रूयमाणस्य स्वप्न इत्यामन्त्रितस्याऽऽक्षेपपुरःसरं पूर्वार्धेनैव परिसमाप्यमानस्य वाक्यस्य नापू. मन्त्रेण संनिहिततराभिसंबन्धस्य प्रतीतेश्चोत्तरार्धीयवाक्य-

अप √ मृ > *अप-मार्- > ¶अपमारिन्[a]– -री तै २,५,१,७.

अप √ मृज्, अपमृज्महे[b] शौ ४, १७, ६; ७; १८, ८; ७, ६७, २; ३; पै ५, २३, ८; अपमार्ष्टु, अप (मार्ष्टु) शौ ४, १८, ७; पै ५, २४,७; अपमृड्ढि शौ ११, १, २९; पै १६,९१,९; अप···मृजेथाम् शौ १८, ४, ४९; ¶अपामृष्ट काठ ६,१; क ३,१२.

अप-मृज्य[c], अप (मृज्य) शौ ४, १८,८.

अप-मृष्ट- -ष्टः मा ७, १२; १७[d]; का ७,६,२;७,३[d]; -ष्टम् शौ ६, ११३,३.

अ(प>)पा-मार्ग[e]- -र्गः मा ३५,११; का ३५,४,१०; शौ ४, १७, ६; ७; १८, ८; ७, ६७, १; २;३; पै २, २६,४; ५,२३, ८;२४,८; १९,१५, १०; -र्गः शौ ४,१७, ८; १८, ७; १९,४; पै २,२६,५; ५,२३,४; २४,७; २५,४; १६,१४७, १-८;१४८, १-१०; १४९, १-८; -र्गान् मै २, ६, ३; ४, ३, ४; काठ १५ २.

अप-मृत्यु[f]- -त्युः खि ७, ७, १०; -त्युम् पै १७, १४,९. [°त्यु-पाप°•].

अप √ *मृप्[g], अपमृपः[h] पै १, ६४, ३.

अप √ मे(प्रणिदाने) > मि[i], अपमयेत मै ४, २,७.

अप-मित्य[j] शौ ६, ११७,१; पै १६, ५०,१.

अप-मित्य[k]- -त्यम्[l] शौ ६,११७, १; पै १६,४९,१०.

†अप √ म्यक्ष्, अपो(प-उ)म्यक्ष ऋ २,२८,६; मै ४,१४,९.

अप √ म्लुच् > अप-म्लुक- -क्तम् ऋ १०,५२,४.

अप √ यज्, अपयजामसि पै १९, २३, ५; ?अपयजामहि[m] पै ४, १८,२.

अप √ या, ?अपा···यान्ति पै १७, १३,८; अपयाहि शौ १९, ५६, ६; पै ३,८, ६; अपयात शौ ६, ७३,३; पै १९,१०,१०. अपययौ पै १७.२९,२.

---

मात्रत्वेन पृथङ् मन्त्रतयाऽवस्थितेररुचिरत्वेन प्रतीतेश्च पूर्वार्धोत्तरार्धयोः समानमन्त्रावयवत्वे मपु. प्रारभ्य उपु. पर्यवसितेरनुपपत्तेश्च पै. अन्यथाश्रुतेश्चोत्तरः कल्पः (तु. पै ३,३०,६ W. च)। अथ पूर्वे कल्पे धा. संदेहः। कथमिति। अप √ मयू (तु. पाधा.) इत्यु उत तन्मूलतया सुकल्पः अप √ *मि(गतौ) इतीति। उभयथाऽपि लेटि मपु१ रूपं द्र.। यत्तु सा. अपसारय इति लोटा व्याचष्टे, तल् लेटश्च लोटश्चार्थसंनिकर्षनिघ्नं द्र.।

[a]) विप. (⌊अपमृत्युमत्-⌋ व्रतरहित- रजस्वलाप्रसव-)। घञन्तात् इनि- प्र. मत्वर्थीयः (पा ५,२,११५)। तत्-स्वरः।

[b]) =सपा. द्राश्रौ ६, ४, ११ लाश्रौ २, १२, ११। काठ ३८,१३ आपश्रौ १६,१६,१ अपहन्महे इति पाभे.।

[c]) गस. ल्यबन्ते कृत्-स्वरः प्रकृत्या (वैतु. सा. लोटि मपु१ इति मन्वानश्चिन्त्यः)।

[d]) =सपा. माश ४,२,१,१४ काश्रौ ९, १०, ४[२] शुअ १; ४५५[२]। आपश्रौ १२, २२, २ अपनुत्तः इति पाभे. (वैप४ ⌊आपश्रौ. टि.⌋ मा ७, १७ इति शोधः)।

[e]) =ओषधि-विशेष-। मा. शौ. पपा. नावग्रहः; वैतु. PW. < अपा (प-आ)° इति ? गस. करणे घञन्ते पूप. दीर्घत्वं थाथादि-स्वरश्च (पा ३,३,१२१; ६,३,१२२;२,१४४)।

[f]) =अकाल-मृत्यु-। प्रास.।

[g]) उपसृष्टस्य धा. विस्मरणे वृत्तिः। √ कृप्, √ तृप्, √ दृप्, √ सृप् इत्येतेषु ऋदन्तेषु धा. मूले सति √ पा(रक्षणे) इत्येतन्मूलः पकारोजन इति द्र.(तु. टि परा √ मृप्)।

[h]) लुङि मपु१ द्र.। पाप्र. लृदित्कारतः अङ् उसं. (पा ३,१,५५)।

[i]) यनि. आत्त्वं च तत इत्वं च (पा ६, १, ४५; ४, ७०) न प्रादर्शिषाताम्। तद्वच्छ्रुत्यनुपलम्भात्। इत्वमपि यत् प्रदर्शितं भवति, तदपीत्वविषयभूते हलादौ किति ङिति ल्यब्-मात्रे विकल्पितमेव (पा६,४,७०) भवति। ततः किमिति। कथमपि न्याय्यत्वे संभवति व्यत्ययसाध्यत्वम् इत्वस्य मा भूदिति (वैतु. सा.)।

[j]) गस.। अत्र यत् सा. उदीचाम् (पा३,४,१९) इति क्त्वाम् आह तत्र चोद्यं भवति। समानकर्तृकयोः (पा ३, ४,२१)। इत्युक्तदिशा पूर्वकाले यथान्यायं प्र. सुसंगतत्वाच्च न्याय्यपौर्वापर्यविपर्ययाऽस्याविषयत्वे सत्यु औदीच्यविकल्पस्याऽवसराभावाच्चेति दिक्।

[k]) विप. (ऋण-)। गस. क्यबन्ते कृत्-स्वरः प्रकृत्या। एपू. टि. द्र.।

[l]) तु. टि. ? २अररिन्-। पाभे. कुसीदम् तै ३,३, ८,१ प्रमृ. द्र.।

[m]) °मसि इति शोधः (तु. मूको. सपा. पूर्वं स्थलं च)।

अप √यु. अपायुवन् पै १८,२१,३[a]. अप····युयोति ऋ १, ९२, ११; अप····युयोधि ऋ ९, १०४, ६; अप···युयोधि ऋ ८, ११, ३; अप···युयोतन ऋ ५, ८७, ८; १०,६३,१२; अप (युयोतन)[2] ऋ १०, ६३, १२; अप(युयुयाताम्) ऋ ८, १८, ८[b].

१अ-पर,रा°– -रः ऋ १, ७४, ८; १२०,२; ६,२७,५; १०,१८,४; ५; २७, ७; १३६, ५; मा ३५, १५†; का ३५, ४, १६†; ¶तै १,६,७, २; २, २,२,५; ४,७[2]; ६, १, ३,६[d]; म १, ८,४;८;९, ६; ३,७,४[2]; ९,१; काठ ६, ६; ८,३;४[4]; ९, १४; १३,४; २३, ४[a]; २५, २[2a]; ३[2]; ¶क ४, ५; ६,८;९[4]; ३६, १; ३८, ५[2]; ६[1]; शौ ९,५,२८; १०,१,२७[2]; ४,१; †१२,२, २३; २५; १३,

a) सपा. शौ १३,२,९ अपावृक् इति पाभे.। अपायवन् इति मूको. ।

b) सपा. तैब्रा ३,७,१०,५ आपश्रौ १४, २९, १ अप (यूयाताम्) इति पाभे. ।

c) प्रथमं प्राति. आद्युदात्तं विप. द्वितीयं च प्राति. अन्तोदात्तं वा. क्रिवि. भवतः । तदिह किमेकमेव शब्दरूपं विशेषणतया क्रियाविशेषणतया वा प्रयोगभेदाद् भिन्नस्वरमुताहो भिन्नव्युत्पत्तिकं सरूपं शब्दद्वयमित्यादिर् विमर्शविशेषापेक्षोऽन्यत्रविस्तरो विषयः द्र. । संक्षेपस्त्वेवमवधेयः । आद्युदात्तं प्रथमं प्राति. पक्षद्वयान्यतरसुसाधं भवति । अ+पर- इत्येवं तस. नञ्-स्वरः (पा ६, २, २) इत्येकः पक्षः । इह पर-शब्दस्य मुख्यतया वर-पर्यायतायां सत्यामवराणां स्वाभाविकीमनुयायिनीं वृत्तिमुपादायाऽवरपर्यायभूतयाऽपरशब्दस्यापि तथाविधां वृत्तिं कल्पयित्वाऽनुयानं कालिकतया परिणमय्य भाक्त उत्तरभावेऽपि पाक्षिकमर्थपर्यवसानं द्र. । एवं तावन्मुख्यामुख्यार्थद्वयसुनिदर्शनः प्रथमः पक्षः । अथ द्वितीयः । यथा अपम्–, अवम्–, उपम्– प्रमृ. अपाऽऽदिभ्योऽव्ययेभ्यो म-प्रत्ययेन तद्धितेन निष्पन्ना उक्तपूर्वाः (तु. टि. २अपम्-)तथैवेह निकर्षसामान्यवाचिनः अप इत्यव्ययात् तद्धितो मत्वर्थीयो रन् प्र. नित्-स्वरेणाद्युदात्तश्च द्र. । कालिकोत्तरभावपरिणामप्रक्रिया चापि प्रथमपक्षवदिहापि प्रवर्तनीया भवति । एतयोर् द्वयोः पक्षयोर् मध्येऽपि किञ्चित् तारतम्यमिव भवति । तथाहि वैयाकरणकुलाचार्यप्रवृत्तिर् ज्ञापयति यथा द्वितीय एव पक्षः साधीयान् स्यादिति । कथमिति चेद् उच्यते । सर्वादिषु (पा १, १, २७) हि पर-शब्दे पठ्यमाने ततो नञि तस. सर्वनामकार्यकलापस्य पूर्ववद् अबाधितत्वात् पुनर् यद् अपर-शब्दः पठितस्तेन ज्ञायते यथाऽयं शब्दो नञ्-पूर्वात् पर-शब्दाद् भिन्न एव स्याद् अत्रोक्तद्वितीयपक्षगतप्रक्रियया निष्पन्न इति । न च बहुव्रीहौ सर्वनामताया बाधितत्वात् (पा १, १, २९) तस्याः पुनः प्रसवार्थम् अपर-शब्दः पठ्यमानोऽत्र २अपर्– इत्यस्य ग्राहक इति सुवचम् । तस्य क्रियाविशेषणतया प्रयोगभूयस्त्वाद् विशेष्यगर्भतया भविष्यत्सामान्यवाचकत्वात् सर्वनामतयोदाहार्यत्वासंभवात् । अथ तृतीयः पक्षः । अपरः '=अपगततरः' इति कृत्वा अप इत्यव्ययाद् घः प्र. स्यादातिशायनिक इत्येवमभिप्रयन्तः PW. प्रभृ. अवग्रहाभावविषये चोद्या भवेयुः । कामं सावग्रहनिदर्शभावाच् चोद्यपरिहारे प्रयत्नः क्रियेत न त्वसौ चरितार्थः स्यात् । समानप्रक्रियया घान्ततया व्याख्यातेषु १अपम्– प्रभृ. शब्देषु सावग्रहत्वस्य विद्यमानत्वदिति दिक् । अथ द्वितीयं प्राति. अन्तोदात्तम् । तत्र विमर्शसंक्षेपः । इह पर-शब्दस्य वर-पर्यायताऽनवकाशा भविष्यदर्थपर्यवसानकालिकविप्रकर्षार्थवाचकता च सावकाशा भवति । किमिति भेदोऽयं विधीयत इति चेत् । नायं विधिरपि तु यथाश्रुत्यन्वाख्यानमात्रमिदं भवतीति । एवं च सति पूर्ववदत्रापि पक्षत्रयमुपस्थाप्य 'न परमुत्तरभवं यतस्तद् यथा स्यात् तथा' इति कृत्वा भविष्यत्-सामान्ये क्रियाविशेषणतया बस. सत्यन्तोदात्ततया च (पा ६, २, १७२) निगमा यथायथं व्याख्येयाः । निकर्षार्थस्य च श्रुतिषु निदर्शनाऽभावाद् द्वितीयस्य तद्धित-र-प्रत्ययान्ततया व्याख्यानवतः पक्षस्य, घान्ताच् छान्दसे अमु-प्रत्ययेऽन्तोदात्ततायां सूपपदायामपि पूर्वोक्तदिशाऽवग्रहाभावाच्च अपराय, अपरीभ्यः, अपरीषु इति निगमानाम् अपरत-घान्ततया व्याख्यातुमलभ्यमानत्वदर्शनात् तत्प्रधानस्य तृतीयस्य चापि पक्षस्य PW. प्रभृ. सूद्घोषितस्य सतः सुत्यजता निर्बाधा द्र. ।

d) पाभे. अम्युः मै ३,६,८ द्र. ।

२,१४; १४,२,३‡[a]; पै ५,२०, १; ८, १९, ११; १६, १५, १; ३७, ८[2]; १७,३२, ३†; ४†; १८, ७,३‡[a]; १९, ८; १९, ५१, ११; २०, २४,४; -रम् ऋ १, ३१, ४; १४५, २; ६, ४७, १५; १०, १३९, २; मा १७, ५९†; का १८,५, १०†; ¶तै २, २,२,५; ३,१२, २; ४,६, ३, ४†; ६, २,४, १; ¶मै १,४, १०; ६, १२[1]; ८,४; ९[2]; २, १,११[b]; ५,४;१०,५†; ३,१, ३[2]; १०, ४; ४, ५, ६?[c]; ¶काठ ६,६[2d]; ११,६; १२,६[2]; १३,४; १८,३†; १९,२;३२,७; ¶क ४,५; २८,३†; २९,८; शौ ९, ५, २७; १३, १,५६[e];५७[e]; १४,१, ६४; १८, २, ३८-४५; ५०; ५१[2]; ४, ४४; पै ५,३८, ५‡[f]; ८,१९,१०; ९,७,४;१६, १०३, ७†; १५३, ६[g]; १८, ६, १२; १९,२६,१०; २०,२७,५[e]; -¶रया काठ ११,६; -रस्मात् मै १,८,४¶; -¶रस्मिन् मै १, ८, ४; काठ २३,६; -¶रस्य मै ४,२,८; -रस्याः ऋ १०, २९, २; शौ २०, ७६, २†; पै १९, ३९, ६;८; -¶रस्याम् मै २,५, ९; -रा ऋ १, १२४,९;१८५, १; मै ३,८, ७¶; -राः ऋ ३, ५५,५; ५,४८,२; शौ १०,१०, ८; पै १६ १०७, ८; -रान् ऋ ७,६,३; शौ १०, ३, १३-१५; पै ३, ३, ३; १६, ६४, ३-५; -¶राभ्याम् तै ७,५,३,१; काठ ३३,५; -राम् ¶काठ २०,१०; २८,४[1]; ¶क ३१, १२;४४,४[2]; शौ ६ १८,१; -राय ऋ ७,२०, ७; पै १, १७, ४[h]; -रासः ऋ ५,४२,६; शौ १८ १,४६‡[i]; पै २, ३०, ३‡[j]; -रे ऋ १०, ४४,७; शौ ९, ११, ३; १८,३, ७२; २०, ९४,७†; पै ८, १९, ५; १६, ५२, २[j]; -रेण ऋ २, २९, ३; मै १, ८, ६¶; क २, १०?[k]; ४१,३?[k]; शौ १०, ४, ३; पै १६, १५, ४; -रेभिः ऋ ६,४७,१७; -¶रो मै २, ५,१; ३, ९, १; काठ १३, १; -रौ पै २०, २८, ७. [ °र- १पूर्व°, शिव° ].

अपर-ज[1]- -जः काठ ३६, ७; -जान् तै ३, ५, ३,२; पै १६, १३१, ३-१०; -जाय मा १६, ३२; का १७, ५, १; तै ४, ५, ६,१; मै २.९,६; काठ १७,१४; क २७,४.

¶अपर-पक्ष[m]- -क्षः तै ३,४,९,६; मै १, ५, ७[2]; ९, ३; काठ ९, ११; -क्षाः तै ५, ७, ६, ६; -क्षान् काठ ३४, १३; -क्षाय मै १, ५, ७; काठ ७, ५; क ५, ४; -क्षे काठ ७, ५; क ५, ४; -क्षौ पै १७,२९,९.

अपर-पाद- -दौ पै १७,२९,९.

अपरा(र-अ)ह्ण[n]- -ह्णः शौ ९,१०, ५; पै १६,११५,२; ३[o]; -ह्णम् मै ४,२,११; -¶ह्णे तै २,१,२, ५[1]; ४,२[1]; मै २, १, ७[p]; काठ १०, १[p]; ३३, ७[2q]; ३४, ३[r]; पै १०, ६, ७$; -ह्णेषु पै ९, १२,१२.

---

a) सपा ऋ १०,८५,४० विभे. ।

b) सपा. काठ १०,५ द्वितीयम् इति पाभे. ।

c) शोधार्थं तु. सस्थ. टि. आहरिष्यति ।

d) सकृत् सपा. क ४,५ पश्चा इति पाभे. ।

e) वैतु. पाम ६,१,७६ प्रमृ. अपराम् इति पाभे. ?

f) सपा. ऋ १०,१३६,५ अपरः इति पाभे. ।

g) सपा. शौ ११,७,६ उत्तरम् इति पाभे. ।

h) सपा. शौ १,१२,४ अवराय इति, मा २३, ४४ का २५,८,६ तै ५,१,१२,२ काठ ५०,६ अवरेभ्यः इति पाभे. ।

i) सपा. ऋ १०,१५,२ प्रमृ. उपरासः इति पाभे. ।

j) अपरे इति प्र२ इति एतः इत्याख्यातेन कर्तृतयाऽन्वितमुताहो अपरा । इह इत्येवं पदविभागः साधीयानिति विमृशन्तु भूयस्तरां विमृशः ।

k) पाठः ? उपरेण इति शोधः ( तु. सपा. खि ५,७, ३,९ मा ६,२ प्रमृ.) ।

l) विप. (भ्रातृव्य-, रुद्र- प्रमृ.) । उस. उप. √जन् + डः प्र. । कृत्-स्वरः प्रकृत्या (पा ६,२,१३९) ।

m) =कृष्ण-पक्ष- । कस. सास्व. (पा ६,१,२२३) ।

n) = मध्याह्नोत्तर-भाग- । कस. उप. अहन्- + समासान्तः टच् प्र. अह्नादेशश्च (पा ५, ४, ८८; ९१) । चित्-स्वरः ।

o) सपा. शौ ९,१०,७ विद्योतमानः इति पाभे. ।

p) सपा. तै २,२, ९,६ तृतीयसवनस्याऽऽकाले इति पाभे. ।

q) यक्र. सपा. तै ७,५,६,४; ७,३ तृतीयसवने इति, तृतीयसवनम् इति च पाभे. ।

r) सपा. तैब्रा १,४,७,६ तृतीयसवने इति पाभे. ।

¶अपरे-द्युस् (:)[a] मै ३, ७, ८; काठ १९,१२[b]; क ३१,२[b].

२‡अ-पर[c]- -रम् ऋ १, ३६,६;१८४, १; १८९,४; २,२८,८; २९,२; ८,२७,१४; १०, ८६,११; मा ३३,९४; तै १,७,१३,१; काठ ८, १७; जै ४,१९,४; शौ २०, १२६,११; -राय ऋ ६,३३,५

‡अपरी[d]- -रीभ्यः ऋ १, ३२, १३; पै १३, ६,१३; -रीषु ऋ १, ११३, ११; १०, ११७, ३; १८३,३[e]; तै १, ४, ३३,१.

¶अप-रज्जु[f]- -ज्जुः काठ ३०,९.

अपर-पक्ष-, अपर-पाद- १अ-पर- द्र.

¶अ-परशुवृक्ण[g,h]- -क्णम् तै ५,१, १०,१[1]; मै ३, १,९; काठ १९, १०; क ३०,८.

?अपरस्कम् पै १९,४२,१.

अ-परागत[g]- -तम् तै ६,६,७,२; मै ४,७,२; काठ २९,२; क ४५,३.

¶अप √राज्, अपाराड्[i] मै १, ६,३; ४ ८,३.

अ-पराजित,ता[g,j]- -तः खि ५, ५, १०‡[k]; मै ४, ११, ५; शौ ५, ३०,१७; ८,५,२२; १०,४,१५; पै ९,१४,७; १६, १६,५; २८, ११; २०, २८, १०; -तम् ऋ [१,११;२; ५,२५,६]; १०,४८, ११; खि २, १०,७; ५,४,६;७; मा २८,२; का ३०, १,२; ¶तै ६, ३, १, १[1]; ४ २, ६[1]; मै ४, ११, १‡; काठ २, १५‡; कौ २,१७८‡; ४, ६;७; जै २, ७, २; ३; ३, १६, १६‡; पै १, ११२,३; १६,८८,५;६; -ता ऋ [३, १२, ४; ८, ३८, २]; तै ४, ४, ५, २; मै २, ८,१४; काठ ४०, ५; ‡कौ २, ४२४; १०५२; ‡जै ३, ३२, १५; ४, २३,१; -ताः तै ५, ७, २,५¶; -ताम् शौ १०, २, ३३; पै १६, ६२,५; २०,२०,६.

?अपराणुत्वा[l] पै ७,६,३.

अप √राध्, अप···रराध तै ३,२,८, २; मै २,३, ८; पै १, ८८, २; अप···रराध शौ २, ३५, २; ¶अपरात्स्यामि तै ६, ४, ११, ३; अपरात्सीः तै ७, ५,१०,१; अप···अरात्सीः शौ ५, ६, ७; पै ६,११,९; ¶अपाराधम् तै २, ५,३,६; ६,५,५,२.

अप-राद्ध- -द्धः शौ ६, ११६, २; पै १६,४९,८.

¶अ-परानंश[m]- -शाय[n] काठ २४,३;

---

[a]) सद्यस्-(पा ५, ३, २२) इत्युक्त-निपातनमात्र-परिवर्धितक्लृप्तिभिः पाणिनीयैर् यद् अहन्यभिधेये अपर-शब्दाद् एद्युसुच् प्र. उच्यते तद् वस्तुस्थितेस्तिरोभावायैवाऽलं भवेत्। उप. दिव्- इत्यस्यैवास्मिन् शब्दविशेषे रूपान्तराऽऽपत्तितया सुवचत्वात्। तथात्वाद् ऋते केवलम् अपर-शब्दस्य प्रत्ययमात्र-योगतो निर्बीजस्य दिनार्थवाचकत्वस्य निराधारत्वादनुपपन्नत्वादित्यलमभियुक्तानां क्वाचित्कच्छिद्राऽन्वेषणेन।

[b]) पाभे. अन्ये-द्युस् (:) मै ३,२,२[2] द्र.।

[c]) बस. अन्तोदात्तः (पा ६, २, १७२)। व्यु. कृते १अ-पर-, अपरी- च टि. द्र.।

[d]) केवल-(पा ४, १, ३०) इत्यत्र टापं (पा ४, १, ४) बाधित्वा छान्दसनित्यनिपातनतया यो ङीप् शिष्टस्तत्र न केवलमयमेव विवेको यल्लोके टापा निर्वाहश्छन्दसि च ङीपा इति। किमित्येवमुच्यते। अव्याप्तिपरिहारायैवमुच्यते। तद् यथा। टाबन्तस्यापि छन्दसि सुभिक्षं वर्तते। तद् एवं किलेह विवेको वक्तव्यो यथा बस. अन्तोदात्ताद् २अ-पर- इत्यस्माद् नित्यं छन्दसि ङीप् भवति, अपरस्माद् आद्युदात्ताद् १अ-पर- इत्यस्मात् टाप् इति। एतच्चैवं विविच्यमानमेतद्-भिन्नस्वर-सरूपशब्दद्वयनिष्पत्तिसंकेते पूर्वोक्ते ज्ञापकान्तरतयापि सुग्रहं द्र.।

[e]) सपा. काग्र ३०,२ अवरीषु इति पाभे.।

[f]) विप. ([त्रिगत बन्धन-] यजमान-)। बस. (पावा २,२,२४)।

[g]) तस. नञ्-स्वरः।

[h]) उप. परशु-वृक्ण- इति तृस.।

[i]) अकर्मकस्य सतः सकर्मकतापत्तौ सत्यां लुङि लेट् लुक् उसं. (पा २,४,८०)।

[j]) विप. (अग्नि-, इन्द्र- प्रभृ.), नाप. (इष्टका-विशेष- [मै २,८,१४])।

[k]) सपा. ऋ १०,११६,५ विभे.।

[l]) *अ-पराणुत्ति->अ-पराणुत्त्या इति मूलतः सतो श्रेषः सुशोधः स्यात्।

[m]) तस. उप. परा √*नंश् (व्याप्तौ) + भावे घञ् प्र. [='मैव सोमक्रयणी पराची गात्' इत्यर्थमेतद् यजुरिति (तु. तै ६, १, ७, ७ मै ३, ७, ६; वैतु. BW. च ?*अ-परांस- इतीवाऽपशोधुकः [तु. ? BW. उप.]; SI. अपनान्। अंशाय इति द्वे पदे इति मन्वान उपेक्ष्यः)]।

[n]) सपा. तै ६,१,७,८ आवृत्त्यै इति पाभे.।

क ३७,४.

अ-परापरण[a]- -णः शौ १२, ९, ७; पै १६,१४५,७.

¶अ-परापात[b]- -ताय मै ३,६,७.

¶अ-पराभाव[b/c]- -वाय तै १,५,२, २; ५,७,२,५; ६,६,२,३[२].

?अपरावता[d] पै १,९८,४.

*अ-परावप्->अपरावपिष्ठ[e]- -ष्ठम् तै ४,१,३,१.

¶अ-परावाप[b/f]- -पाय मै ४,१,२; काठ ३१,१; क ४७,१.

अ-पराहत[b]- -तः शौ १८,४,३८.

अपराह्ण- १अ-पर- द्र.

¶अ-परिगृहीत[b]- -तः काठ २६,१०; क ४१,८; -तम् काठ २०,४; क ३१,६; -ते तै ५,२,६,३.

¶अ-परि(त्त>)त्ता[g]- -त्ता मै ३, १,८.

१अ-परिपर[h]- -रेण शौ १८, २, ४६.

¶२अ-परिपर्[i]- -रः मै ३,७,७;४,८, ५; काठ २४,६[j]; क ३७, ७[j].

¶अ-परिमित,ता[b]- -तः तै १, ७, ३, २[२]; ५, १, ८, ४; मै ४,१, १०; ७, ४; काठ ८, १३; ९, १२; २६,४; ३४, ९; क ८ १; ४१, ?; $शौ ९, ५,२१; १५, १५,९; $पै १६, ३४, ५; ९९, ८; -तम् तै २,५,१०, ४; ११, २; ३, १,७, ३; ६, १, १, ६; मै १, ६,१०; ८, ६; ७; ३, २, ५; ६, ३; ७, ४; ८, ७[k]; काठ ८,३; १३; १३, १; २४, ५[१]; ३१,१५; क ६, ८; ८, १; ३७, ६[१]; शौ ९, ५, २२[२]$; -तस्य तै २, ५, १०, ४; ५, १, १,४; २,६, ३; मै ३, १, २;६,९; ७, ४; ४, ५,३; काठ ८, ३; १९, १;६; २६,६; ३४,९; क ६, ८; २९, ८; ३०, ४; ४१, ४; -ता तै ५,१,१, ४; मै ३, १,२; काठ २५,६; क ३९, ३; -ताः मै १, १०,१७; ३, २, ५; ९, ५[२]; ४, ५, ३; काठ २०,१; ३४,९;३६, ११; क ३१,३; $शौ १५, १३, ९;१०; -तात् तै २, ६, ४,२; ३,१,७,३; मै ३,८,६; काठ २५, ४; क ३९,१; -तान् तै ६, १, ४,८; -ताभिः तै ५, २, ६,३; -ताम् काठ १९, १; ६; क २९, ८; ३०, ४; -ते मै १, ६, १०; काठ ८,३; क ६,८.

¶अपरिमित-छन्दस्[l]- -न्दसः तै ५,१,८,४.

¶अ-परिमित्य[b] तै ५, २, ६, ३; काठ २०,४; क ३१,६.

¶अ-परिमोष[b]- -षाय तै ६, १, ११,५.

¶अ-परिवर्ग[b/m]- -र्गम् तै ३,४,१०, ४; ५,३,१०,४;४,३, ४; ५,३;

---

a) बस. अन्तोदात्तः (पा ६, २, १७२)। उप. *परा- पुरण-(<परा √पृ [तु. परा-पुर्-, परि √पृ> परि-पर्-]) यद्र. (तु. ?W., MW.; वैतु. PW. अ+पर- +१अपर- + नः प्र.?, ता. अप-रै- > *अप-रा- + *अप-रण- ?)।

b) तस. नञ्-स्वरः।

c) उप. परा √भू + भावे घञ् प्र.।

d) पाठः? आ परावतः इति शोधः (तु. पै २०,६१, ११)।

e) विप. ([विनाश-रहित-] पुष्कर-)। परा √वप् इत्यस्माद् घ-प्रत्ययेन निष्पन्नस्य नञ्-पूर्वस्य बस. अन्तोदात्तस्य यनि. सत इष्ठन्नन्तत्वे (पा ५,३,५५ [तु. १वसिष्ठ- प्रभृ.]) नित्-स्वरः। पाप्र. तु परावप्- इत्येतस्यैव प्रथमं मतुबन्तत्वे तत आतिशायनिके इष्ठनि प्र. विन्मतोः (पा ५,३,६५) इति मतुपो लुकि अ+परावपिष्ठ- इत्येवं तस. नञ्-स्वरः स्यात्।

f) उप. परा √वप्+भावे घञ् प्र.।

g) विप. ([असमर्पिता-] उखा-)। उप. परि √दा (दाने) + कर्मणि क्तः प्र. तकारादेशश्च (पा ७,४,४७)। अत्र दस्ति (पा ६,३,१२४) इत्युक्तस्य गतिदीर्घत्वस्याऽभावो मौलिको वा प्रामादिको वेति निगमान्तरस्यापेक्षया विमर्शसहोऽयं विषयः द्र.।

h) वि॰. ([परिपन्थि-रहित-] पथिन्-)। तस. नञ्-स्वरः (वैतु. सा. बस. इत्याह तत्-स्वरानुपपत्तिप्रसङ्गाच्चिन्त्यम्)। उप. विप. परि-पर-([<परि √पृ 'हिंसायाम्' + कर्तरि कृत्]=परि-परिन्-) तद्धति वृत्तिः।

i) =१अ-परिपर-। बस. अन्तोदात्तः। उप. भाप.। अ॰ इति पठन्तः BW. प्रभृ. चिन्त्याः।

j) सपा. तै ६,१,७,३ अरक्षोहतः इति, मै ३, ७,७; ४,८,५ अरक्षस्युः इति च पाभे.।

k) सपा. काठ २५, ८ क ४०, १ असंख्यातम् इति पाभे.।

l) बस. पूप. प्रकृतिस्वरम् (पा ६, २, १)।

m) वा. क्रिवि. द्र.। भावे घञन्तं यद्वा णमुलन्तम् (तु. भा. [तैब्रा २, १, १०, ३ प्रभृ.], सा. MW. च; वैतु. भा. [तै ३,४,१०,४] बस. इति ?)।

५,१०,६;६,१,१,८;३,४,३.
अ-परिविष्ट[a]- -ष्टम् ऋ २,१३,८.
¶*अ-परिवीत[a]- -तम् काठ २६,६[२]; क ४१,४[२].
¶अ-परिश्रित्य[a] मै ३,५,३[२].
अप √रिष्,अप···रिषत् पै ४,२२,५.
¶अ-परिषिञ्चत्[a]- -ञ्चन् मै १,१०, १९[२]; ३,३,५[२b]; काठ २१, ७[२]; ३६,१३.
‡अ-परिहृत[a]- -ताः मै ४, १२, ४[c].
†अ-परिह्वृत[a d]- -तः ऋ १०,६, २;मै४,१४,१५;-ता ऋ ८,७८, ८; -ताः ऋ १, १००, [१९[c]; १०२,११[c]]; १०,६३,५; काठ १२,१४.
अपरी- २अ-पर- द्र.
†अ-परीत[a]- -तः ऋ ५, २९, १४; —तम् ऋ ८,२४,९; -ताः ऋ १,१००,३; —तासः ऋ १,८९, १; मा २५,१४; का २७, ११, १; काठ २६,११.
अ-प(रि>)रीवृत[a]- -तः ऋ २, १०,३.
अप √रुध्,>रुरुत्स, अप···अरोधम् ऋ १०,३४,२.
¶अपरुणद्धि काठ २७,५; २८, १; क ४२, ५; अप···रुणद्धि ऋ १०, ३४, ३; ¶अपरुन्धन्ति[e] काठ १०, ८; अपरुध्मः शौ १२, ३, ४३[f]; ¶अपरुन्ध्युः काठ २७,५; २८, १; क ४२,५.
अप·····अरुधन् शौ १८, २, २७.
¶अपरुध्यते तै ६, ६, ५, ४;
¶अपरुध्यताम् तै ६,६,५,३.
अप-रुद्ध- -¶द्धः तै २, १, ४, ७[२]; ८; २, ८, ४; ३, १, १; ६,६, ५,३; ४; काठ १०, ८[e]; ९; ११, ६ ; २७, ५[२] ; २८, १[२]; क ४२,५[२]; —द्धम् ¶काठ २७,५,२८,१[२]; ¶क ४२, ५; शौ ३, ३, ४; पै २, ७४, ४. [°द्ध- ज्योक्°]
¶अप-रुध्य काठ ३५, १८; क ४८, १६.
अप-रुध्य- अन्°.
¶अप-रुध्यमान- -नः तै २, २, ८,५;३,१,१;२.
अप-रुरुत्स्यमान- -नः काठ १०, ९;११,६;३७,११.
¶ अप-रोद्धृ[g]- -द्धा मै २, २, १०; काठ १०, ९; —द्धारः तै २,३, १,१; मै २,२, १; काठ ११,६.
¶अप-रोध[h]- -धात् मै २, २, १०.
¶अप-रोधुक, का[i]- -काः मै २,२, १;४,४,२. [°क- अन्°].
अप-रोध्य- अन्°.
¶अ-परुस्[j]- -रुषि मै ३,९,२.
अप-रूप[k]- -पम् ¶तै ३, ५, ७, ३; ¶काठ २२, ८[२]; ३५, १९; ¶क ३५,२[२];४८,१७; शौ १२, ४,९; पै १७,१६,९.
अपरेद्युस् १अ-पर- द्र.
?अपरेहि[l] पै १६,३७,९.
¶अ-पर्ण, र्णा[j]- -र्णः काठ २६, ३; क ४१, १; –र्णम् तै ६, ३, ३, ४; $पै २, ७०, ५; १९, ३४, १६; –र्णा मै४,१,१; काठ २६, ७; क ४१,५.
अप(प-ऋ)र्तु[m]- -र्तुः शौ ३,२८,१.
अ-पर्वन्[j]- -र्वन् ऋ [४, (१७, ७), १९,३].
अप(प √ऋ)र्षु, अप···अर्षतु पै १९, ३१,६[n].
अ-पलाश[j]- -शः ऋ १०,२७,१४.

---

a) तस. नञ्-स्वरः।
b) अत्रैकतरत्र यद् विकरण-स्वरस्तादवस्थ्येन प्रादर्शि तदपलक्षणत्वाच्चिन्त्यम्।
c) सपा. °ह्वुताः<>°ह्वृताः इति पाभे.।
d) उप. परि √ह्वृ+क्तः प्र.।
e) यक्र. सपा. मै २,२,९ निरुद्धः इति, निरुद्धम् इति च पाभे.।
f) सपा. पै १७,४०,३ अवरुध्मः इति पाभे.।
g) गस. तृजन्ते कृत्-स्वरः प्रकृत्या (पा ६,१,१६३)।
h) गस. घञन्ते थाथादि-स्वरः (पा ६,२,१४४)।
i) गस. उकञन्ते कृत्-स्वरः प्रकृत्या (पा६,१,१९७)।
j) बस. अन्तोदात्तः (पा ६,२,१७२)।
k) प्रास. अव्ययं पूप. प्रकृतिस्वरम् (पा ६, २, २) अथवा बस. पूप. प्रकृतिस्वरम् (पा ६, २, १) स्यात् (तु. भा.) तत्फलभूतं विप. च विशेष्यगर्भं द्र.। अपि वा बस. सतः क्रिवि. द्र.।
l) पाठः? परा √इ > परेहि इति सुपठं छन्दोऽनुवृत्त्य द्र. (तु. शौ १०,१,२८ अथेहि इति पाभे.)।
m) विप. ([अपकृष्टाऽऽर्तवबीजोपेता-] यमिनी- [गो-])। बस. वा प्रास. वा। उभयथाऽपि गत्यादौ स्वरे प्राप्ते (पा ६, २,१;२) उपसर्गादुत्तरस्य समासमात्रेऽन्तोदात्तप्रकरणेऽस्य उसं. द्र. (पा ६,२,१८७)।
n) अप···अर्षतु > शौ ४, ३, २ पुरेण·····अर्षतु इति पाभे.।

अप √लिख्, अप···लिखात्, अप (लिखात्) शौ १४,२,६८; पै १८,१३,८.

अ-पलित- -ता: शौ १९,६०, १.

¶अ-पलितंभावुक[a]- -कः मै ४, १,९.

अप √लुप्, म्प्, ¶अपलुम्पति मै १, ६, ५; ¶अपलुम्पेत मै १, ६,४; अपलुम्पतु पै २,८१, २[b]; ५, १४, १; १६, १४७, १-८; १४८, १-८; १४९, १-८; २०, ५९,२; अपलुम्पन्तु पै १९, ३२, १८; अपलुम्पत पै १९,४५,१४; ¶अपालुम्पत मै १, ६, ५; अपालुम्पन्[c] काठ १२,१३; अपालुम्पन्[d] काठ १२, १३[२]; २७, २[२]; क ४२, २[२].

अपालुपत पै ८,१५,१२.

अपलुप्यते शौ ५, १७,७; पै ९, १५,७.

¶अप-लुम्पम्[e] मै १,६,५.

अप √वच्, अपावोचत पै २,२,४[f].

अप-वक्तृ- -†क्ता ऋ १, २४, ८; मा ८, २३; का ९, ४, १; तै १, ४, ४५, १; मै १, ३, ३९; काठ ४, १३; क ३, ११; पै २, २, ४$[f]; १९, ९, ११; -क्तारः शौ ५, १५, १-११; पै ८,५,१-११.

अप-वाचन- अन्°.

अप-वत्- २अप्- द्र.

अप √वद् > अप-वादि(न् >)नी- -नी पै १९,२३,८.

अप √वध्, अप···वध्यासम् मा १, २६; का १, ९, ४; अप-(वध्यासम्) मै १, १, १०; ४,१, १०; अपावधीत् ऋ १०, १४६, ४; मा ५, ८[१]; का ५, २, ८[१]; काठ २, ८[४]; क २, ३[४]; ¶अपावधीत् मै ४, ३, ४; अपावधीः मै १, २, ७[१]; कौ १, ३५३; जै १, ३७, १; अपावधीम् तै १, २, ११, २[२].

अप √वप्, अपवपति[g] काठ १०, ५; अप···वपामि पै १७,३८, ३[b]; अपवप[h] ऋ ८, ९६, ९; अपावपत् शौ ८, ८, ५; १९, ३६, ४; पै २, २७, ४; ९, ६, ८; ११, ७, ९; १६, २९, ५; अपावपत् ऋ २, १४, ६; तै ३,३,७, ३¶; अपावपः ऋ १, १३३,४.

अप-वर्तृ-, अप···वम् अप √वृ द्र.

अप √वस् (वधा.), > अप-वास[i]- -से शौ ३, ७, ७[२]; पै ३, २, ६[२].

अप-वास्यमा(न >)ना[k]- -ना पै १३,५,१६.

अप √वह् (वधा.), ¶अपवहति काठ ३७,११; अपावहत्[l] शौ २०, १३०, १; अपवहेः पै ३, २५, १३[m].

*अप-वाहु[j]- > ¶अपवाह-तस्(:) तै ६, ६, ५, ४; मै ३,२,८.

अप √वा, †अपवाति ऋ १, १६२, १०; मा २५, ३३; का २७, १३,२; तै ४, ६, ८, ४; मै ३, १६,१; काठ ४६,४.

अप-वात- -वान् शौ १९, ५०, ४.

?अपवाचिराम्[n] पै १६,२९,९.

अप √विच्, अप···विनक्तु शौ १२, ३, १९; पै १७, ३७, ९; अपा-विनक्[o] शौ ११, ३, ४; पै १६, ५३,९.

---

a) अ-नग्नंभावुक- इत्यत्रत्यं टि. द्र.।

b) अपुलम्पतु इति पाठः? यनि. शोधः (तु. टि. ?अक्षौर्; वैतु. BKA. उपलुम्पतु इति शोधः)।

c) सपा. तै २,१,२,२ प्रायश्चित्तिमैच्छन् इति पाभे.।

d) एकतरत्र पाभे. अपाकृन्तत मै २, ५, २; अन्यत्र सपा. तै २, १,२, २ प्रमृ. अपाघ्नन् इति पाभे.।

e) गस. शक्यार्थे णमुल् प्र.। कृत्-स्वरः प्रकृत्या।

f) पाभे. यक. अध्यवोचत्, अधिवक्ता मा १६, ५ द्र.।

g) अव° इति संकेतयमानः SI. विमृश्यः। सपा. मै २,१,११ अपहते इति पाभे.।

h) सपा. शौ १२,३,२२ अपि···वपामि इति पाभे.।

i) वैतु. GW. -पः इत्येवमुशन् चिन्त्यः प्रकरणे लोटः प्रयोगस्य दर्शनात्।

j) गस. घञन्ते थाथादि-स्वरः (पा ६,२,१४४)।

k) विप. (वशा-)। उप. <√वाश् > स इति MW.।

l) तु. RW.। शिष्टं सस्थ. ?बहुलिमा टि. द्र.।

m) सपा. पै १७, २९, १७ संबर्हः इति, विबर्हः इति च पाभे.।

n) अनपवाचना (शौ ८, ८, ९) इत्यस्य स्थाने चादपवाचिराम् इति दुःश्लेषा संहिता द्र.। यनु. छेदे चात इत्यस्य चाऽऽत् इत्याकारिका व्यवस्था भवित्री काप्यन्या वेत्यादि सर्वं भूरिविमर्शापेक्षमेव।

o) सपा. तै १,१,५,२ विविनक्तु इति पाभे.।

१¶अ-पवित्र[a]— -त्रम् मै ४,५,७.

२¶अ-पवित्र[b]— -त्रौ तै ६,४,६,३.

¶अ-पवित्रपूत[a,c]— -तः,-तम् मै ४, ५,५.

अप-विद्ध— अप √ व्यध् द्र.

अप √ विश् > वेशि, अपवेशय > या शौ ९,२,२५; पै १६,७८,७.

अप √ वी †अपवेति ऋ ५,६१, १८; १०,४३,२; शौ २०,१७,२.

अ-पवीरव[d,a]— -वान् ऋ १०,६०,३.

अप √ वृ (आच्छादने), अप'''वरत ऋ ६,४५,२४; कौ २, १०१८; जै ४,९,९; शौ २०,७८,३. अप'''वर्षथः[e] ऋ ८, ५, २१; †अ(प>)पावृधि ऋ १,७,६; २,२,७; ४, ३१, १३; ७, २७, २; ८,२३, २९; तै २, २, १२, ६; मै ४,१२,२; कौ २,९७१; शौ २०,७०,१२; अप'''वृधि ऋ १, १०,७; अपावृत ऋ ५, ४५,१. ‡अपो'''वृणुते[f] कौ १, ३०३; २, १०१; जै १. ३२, १; ३, १०,३; ¶अपवृणोति[g] काठ १३, ३; अ(प>)पावृणु[h] का ४०, १,१५; अपावृणोत् ऋ १,१३०, ३; ३,४४,५; ४, २८, १; १०, १३९,६; मै २, ५,३¶; †४,९, ११; ११,२; काठ ९,१९†; १३, ३¶; †अप'''अवृणोत् ऋ ३, ३१, [२१; १०, १२०, ८]; ८, ६३, ३; पै ६, १, ८; अप''' अवृण्वत ऋ २,३४,१; अपावृणोः ऋ २,११, १८; अपावृणोः ऋ ८,१००, ६; अप'''अवृणोः ऋ १, ५१, [३; ९, ८६, २३]; ४; अप'''अवृणोः ऋ १,१३२,४. †अप'''ववार ऋ १. ३२,११; पै १३, ६,११; अप'''ववर्थ ऋ ३, ४३, ७; अप'''आवः[i] ऋ १,११३,१४; ३,५,१; ७, ७५, १; अप'''वः ऋ १, १२१, ४; अप''''वः ऋ २, १४, ३; †अपव्रन् ऋ ४, २, १६; ५५, ६; ५, २९, १२; मा १९, ६९; का २१,४, १९; तै २, ६, १२, ४; काठ १६, ९‡[j]; शौ १८,३, २१; अप'''व्रन् ऋ ४,५,८; †अपावः ऋ १, ११,५; कौ २, ६०१; जै ३,४८, १७; ?अप''' वम्[k] ऋ १०,२८,७.

अप-वर्तृ[l]— -र्ता ऋ ४,२०,८.

अपा-वृत्— अन्°.

†अ(प>)पा-वृत[m]— -तम् ऋ १, ५७,१; शौ २०,१५,१.

अ(प>)पा-वृति[n]— -तिम् ऋ ८, ६६,३.

अप √ वृज्, अपवृङ्क्ते ऋ १०,११७, ७; अपवृञ्जाते शौ १०,७,४२; अपवृङ्क्ष्व[o] शौ ३,१२,९; पै २०, २२,३; ?अपावृक्[p] शौ १३,

---

[a]) तस. नञ्-स्वरः। [b]) बस. अन्तोदात्तः (पा ६,२, १७२) इति। [c]) उप. तृस. पूप. प्रकृतिस्वरम्।

[d]) सस्थ. पवीर-व- टि. द्र.।

[e]) लेटि सिब्-अटौ द्र.। वर्षप्रतिबन्धवशाद् इषश्च सिन्धवश्च पिहितद्वारतिरोधापितवस्तुवन्नैव दृष्टिपथमवतरेयुः। तत्तिरोधापकस्य द्वारापिधानस्येव सतस् तन्निरोधनस्याऽपवरणमाशंसितं भवति [तु. वें. PW. प्रभृ; वैतु. सा. यन्मते अप इत्यस्य योग्यक्रियायाश्च योग्यकर्मणश्चाऽऽक्षेपेण 'मेघादपकृष्य' इति कृत्वा पृथगन्वयो भवति। वर्षथः (<√वृष्) इति क्रिप. च सेचनार्थकस्य सतः इषः इत्येतेनैव कर्मणाऽन्वय इष्यते (न सिन्धून् इत्येतेनापीत्यभिसन्धिः)। चिन्त्यं त्वेतन्मतं भवति। आक्षेपबहुलत्वस्य स्वारस्यविघातकत्वाव्यभिचाराद् द्वारा इत्यस्य द्वि३ सतः तृ१ एतदिति कृत्वा व्याख्यानस्य समानप्रकरणान्तरसर्वस्वविरोधाच्च (तु. ऋ १,१२८,६; ३,५,१ प्रभृ.)]।

[f]) सपा. तैब्रा ३, १,३,२। ऋ ७,८१,१ अपो(प+उ) '''व्ययति इति पाभे.।

[g]) अप, आ इति द्व्युपसृष्टं क्रि१. संकतयमानः SI. चिन्त्यः। मुपा. वैपरीत्यदर्शनात्।

[h]) अपा° इति मुपा. स्वरः ? यनि. शोधः। छान्दसं दीर्घत्वम्।

[i]) छान्दसः आङ्-आगमः (तु. [वि √ वृ 'आच्छादने' >] व्यावः, वि'''आवः इति)।

[j]) सपा. ऋ ४, १, १५; १६, ६; १०, ४५,११ प्रभृ. आपमं २,११,३० विवव्रुः इति पाभे.।

[k]) अप''' वः इति शोधः (तु. सस्थ. टि. ०इन्द्र)।

[l]) गस. तृजन्ते कृत्-स्वरः प्रकृत्या (पा ६,२,१३९)।

[m]) कर्मणि क्तेऽनन्तरगतिस्वरः पूप. दीर्घत्वं च (पा ६,२,४९;३,१३७)।

[n]) गस. क्तिनि तादौ (पा ६, २, ५०) इत्युक्तः स्वरः।

[o]) सपा. मागृ २,११,१४ उपसेध इति, आपमं २, १५,५ हिगृ १,२७,७ अपसेध इति च पाभे.।

[p]) लुङि प्रपु१। अपावर्क् इति प्राप्ते गुणाभावे यनि.। सपा. पै १८,२१,३ अपायुवन् इति पाभे.।

२,९.

अप-वृज्य– अन्°.

अप√वृत्>वर्ति, अप···वर्तय ऋ २,२३,७.

?अपवृप्राणिमजूजह्य पै ५,१४,५

अप√वृश्च्, अपवृश्चामि पै ७, २, ६[a]; अप···वृश्चतु पै ४,४,७[b].

अप√वे, अपवय ऋ १०,१३०.१.

अप√वेन्, अपवेनः[c] शौ ४, ८,२.

?अपव्यक्ता पै ५, १३, ६; १४, ३, १०.

अप√व्यध्>विध्, अप···विध्यतः मै ३,१६,३‡[d]; †अप···विध्यताम् ऋ ६, ७५, ४; मा २९, ४१; का ३१, २, ४; तै ४, ६, ६, २; काठ ४६, १; पै १५, १०,४.

अप-विद्ध– अन्°.

अप√व्ये, अपो··· व्ययति ऋ ७,८१, १[e]; अपव्यये शौ ६,९१,१[f].

अप-व्ययत्– अन्°.

१अप-व्रत[g]– -तम् मै ४ २,१२.

२अप-व्रत[h]– -तान् ऋ १, ५१,९;५, ४२, ९; –तेन ऋ ५, ४०, ६; खि ३, २१, १; मा १७, ४७; का १८,४,१५; कौ २, ११९०; शौ ३.२,६; पै ३,५,६.

अप√शत्[i]>शाति[j], अप···शातय शौ १९,३४,३[k].

¶अ-पशव्य– -व्यः तै ६, ३,३, ४; काठ २६ ५; क ४१, ३; –व्यम् तै ६, १, ९,२; काठ ६,३; क ३,२.

¶अप√शास्, अपाशासुः मै ३.८, ५;६; ४,५,८;६,३.

¶अप-शीर्षन्[l]– -र्षा, –र्षाणम् तै ५,५,४,३.

¶१अ-पशु[m]– -शवः तै ५, २, ९, ४.

¶२अ-पशु[n]– -शवः काठ१२,२;–शुः तै१,७,१,३[3]; ६; २,६,६,६;८, २; ५,२,६,३[2]; ९, ३; ४; ३,१, ४[2]; ६, १, ९, २[1]; ३, २,५;३, ४[2]; ११, ५[2]; ६, ३, ५; ४,-४; मै १,८,९; ३,२,७[2]; ४,८[o]; ७, ७; ४,१, ११; काठ ८,८; १०, ११; १२,१;२; ५; २०, ३;४[2]; ८; १०[2]; २४, ४; ६; २६, २; २७,६;२८,३; २९, ३; ३०,९; ३१,१३; ३५, १८; १९; क ७, ३; ३१.५; ६[2];१०; १२[2]; ३७, ५; ७; ४०, ५; ४२, ६; ४४,३; ४५,४;४८,१६;१७.

अपशु-ता[p]– -ता पै १६, १४९, ८; –¶ताम् मै २.१,८.

अ-पशु(हन्>)घ्नी[q]– -घ्नीः शौ १४,१,६२.

अप√शुच् (दीप्तौ) > शोशुच् > †φअप-शोशुचत्[r]– -चत् ऋ [१,९७,१[2]; २–८]; मा ३५,६;

---

[a]) सपा. शौ २, ३२, २ अपिवृश्चामि इति पाभे.।

[b]) सपा. शौ १,७,७ अपि···वृश्चतु इति पाभे.।

[c]) मा, अपवेनः<>सपा. पै ४,२,२ वीडयस्व इति, काठ ३७,९ तैब्रा२,७,८,१;१६,१ वीरयस्व इति च पाभे.।

[d]) सपा. ऋ ६,७५,४ अप···विध्यताम् इति पाभे.।

[e]) पाभे. कौ १,३०३ अपो···वृणुते द्र.।

[f]) सपा. पै १९ १८,७ अपह्वयताम् इति पाभे.।

[g]) प्रास. अव्ययं पूप. प्रकृतिस्वरम् (पा ६, २, २)। मै. संकेतिते स्थले कर्तृतया योगः कर्मतया वाऽथापि क्रियाविशेषणतया वेत्यत्र भूयान् विमर्शोऽयापि सावकाशः द्र.। क्रियाविशेषणतया इति चेदध्यवसीयेत तर्हि स्वरूपतः बस. इत्येव सुवचम्। तथात्वे स्थलान्तरीय-निगमान्तरैः संगतत्वसामान्यात्। कर्तृत्वकर्मत्वा-न्यतरपक्षे तस. इत्येव सुवचम्। तथात्वे प्राति. एतद् निगमान्तरीयात् प्राति. बस. इत्येवं व्याख्येयाद् भिन्नं वाच्यम्। एतत् सर्वं यस्थ. सुधीभिः सुधी-विषयीक्रियेत।

[h]) बस. पूप. प्रकृतिस्वरम् (पा ६,२,१)। नापू. समान-स्वरं किञ्चिद्-भिन्नार्थयोगं प्राति. वस्तुतो भेदेन प्रदर्शनार्हं न वेत्यत्र नापू. टि. द्र. स्वयं च विविग्भिर् विवेच्यम्।

[i]) धा. *चातने वृत्तिः (तु. Eng. √*shoot* [गमने])।

[j]) तु. √शत् (हिंसायाम्)। पाप्र. तु <√शद् (पा ७,३,४२)।

[k]) सपा. पै ११,३,३ अप···साधय इति पाभे.।

[l]) बस. (पावा २,२,२४) पूप. प्रकृतिस्वरम्।

[m]) तस. नञ्-स्वरः।

[n]) बस. अन्तोदात्तः (पा ६,२,१७२)।

[o]) सपा. अपशुः स्यात्> तै ५.५,७,१ पशून् व्यर्ध-येत इति पाभे.।

[p]) भावे तलन्ते लित्-स्वरः (पा ६,१,१९३)।

[q]) तु. टि. अ-देवृघ्नी-।

[r]) गस. शत्रन्ते कृत्-स्वरः प्रकृत्या। वा. अघम् इति कर्मपदमनेनान्वितं द्र. (तु. सस्थ. आ√शुच् [दीप्तौ]> आ····शुशुग्धि)। अत्र सा. कल्पद्वयं भवति। प्रथमे कल्पे तावद् अप इति कप्र. नः (द्वि३) इत्येतदभिसंबद्धो भवति तद्धीनमाख्यातं च सकर्मकत्वे सति लेटि साऽट्के लिपि

२१; का ३५, ४, २०; २१; शौ ४, ३३, १[२]; २-८; पै ४, २९, १[२]; २-८.

अप√शुष्, अपशुष्यति शौ ६, १३९,४.

अप-शुष्क,ष्का[a]- -ष्का, -ष्काः तै २,१,४,८.

?अ-पश्चा-दग्ध्व्-- -ग्ध्वा शौ १९,५५, ५[b]; पै २०,४१,९.

‡अ-पश्चा-दघ्वन्[c]- -घ्वने[d] कौ १, ३५२; २,७९०; जै १,३७,१.

अ-पश्चा(त्>)द्-दघ्वन्[c]- -घ्वने[d] ऋ ६,४२,१; -घ्वा मै ३, ९, ४[2b];¶.

†अप√श्नथ्, अप···श्नथिष्टन ऋ ९, १०१, १; कौ १, ५४५; २, ४७; जै १,५६,१; ३,५,६.

अ-पश्य[e]- -श्याः ऋ १, १४८,५.

अ-पश्यत्[f]- -श्यते तै ७, ५, १२,१; काठ ४५, ३; -श्यन् ऋ १०, १३५, ३; -श्यन्तः तै ३, २, २,१.

?अ-पश्यमान[g]- -नः पै ७,१९,७.

अप√श्रि

अप-श्रय[h]- -यः शौ १५,३,८.

अप-श्रित[i]- -तः ऋ [(१, ८४, १४); ५,६१,१९]; ८,२४,३०;

---

रूपम् (तु उ. मा ३५, ६)। अथोत्तरे कल्पे सगतिकमुक्तपूर्वमेवाऽऽख्यातमकर्मकत्वेनाऽन्वितं भवति । उभयत्र अघम् इति च कर्तृपदम् । अथापीह सा. आ···शुशुग्धि इत्युत्तरे क्विप. √शुच्(दीप्तौ) इत्यस्माच् शोकाऽर्थकतयाऽभिसंमतात् प्रथमाद् धा. दीप्त्यर्थकं सन्तमपरं धा. विवेचयिषति । तदेतत् सर्वं चिन्त्यं भवति । अग्निकर्तृकाऽऽशोचनाऽपशोचनक्रिययोर्विषयीभावेनाऽभिन्नप्रतियोगिकयोः सतो रयेश्च अघस्य चोपस्थाप्यमानत्वप्रतिभानाद् अपाऽऽङोः उपसर्गयोर् भिन्नार्थद्योतकत्वचमत्कारसमर्पणे श्रुतिस्वारस्यस्योपपन्नतरत्वादिति यावत् । एस्थि. पराभिमतस्य भिन्नधातूपकल्पनस्य च प्रथमे वाक्ये अघ- इत्येतत्कर्तृत्वस्य च क्विप. सकर्मकत्वाऽकर्मकत्वान्यतरत्वं प्रत्यौदासीन्यस्य च समानं वैयर्थ्यं द्र. । ननु यदुक्तं सा. नः इति द्वि३ इति अप इति च कप्र. तद्युक्त इति चाहेति, तन्न । भाष्ये नः इति ष३ इत्येवम् उक्तत्वाद् अप इत्यस्य गतित्वेन प्रदर्शनाच्चेति । सत्यं, वचसैवमेव तत्र भवति तात्पर्यतस्त्वन्यथेति । तत् तु कथमिति । अप इत्यस्य गतित्वे पर्यवसन्ने सति तदर्थस्याऽऽख्यातमात्रानुरञ्जकत्वे चरितार्थत्व-स्वाभाव्याद् 'अस्मत्तो निर्गत्य' इत्याकारकस्य पञ्चमीस्थेन सना. योगतः प्रवर्तयितुमिष्यमाणस्य व्याख्यानस्य नितान्तमन्याय्यत्वे सत्यप्यस्मत् प्रस्तावितचोद्यप्रकारत एव सूपलम्भात् (तु. उ. नः = अस्मान् इति स्पष्टं भाषमाणः) । अथाऽन्ततो यच्च म. अनुस्रियमाणं लेटि रूपम् इत्याकारकं कल्पान्तरमाह, तदप्यसत् । ऋगङ्गतया व्याख्यायां कथंचित् सिध्यत्यपि निघाताभावे (तु. सा.) तदभीष्टे यजुरङ्गतामात्रेण व्याख्याने तदनुपपत्तेरिति दिक् ।

[a]) विप. (लोक-, विश्-) । गस. अनन्तरगति-स्वरः (पा ६, २,४९) । पूप. निन्दायामिति ।

[b]) सपा. ?°दग्ध्वा [तु. सा.] <> °द्-दघ्वा (आपश्रौ ७, २८, २ माश्रौ १, ८,६,२२ अप्राय २, ७ अअ १९, ५५ प्रमृ. च [तु. BW. RW]) इति पाभे. । यत्तु पपा. अपश्चा । दग्ध्वऽअन्नस्य (तु. शंपा.) इति प्रादर्शि तदसत्, अन्नस्य इत्यस्य कर्मभूतस्य पदस्य नितान्तपार्थक्यस्याऽनिवार्यत्वात् (तु. पाभे. मै ३,९,४) ।

[c]) विप. (नृ-, अस्मद्- [मै.]) । तस. नञ्-स्वरः । एकतरत्र उप. पश्चा इति पूप. भवति (तु. [सरूपे] ऋ १, १२३,५ प्रमृ.)। अन्यतरत्र पश्चात् इति । वस्तुत एनयोरभेदः । उप. √दघ् गतौ [तु. निघ २,१४] + वनिप् प्र. ।

[d]) सपा. °दघ्वने <> °द्-दघ्वने (तैब्रा ३,७,१०,६ आपश्रौ १४, १९, २ च) इति पाभे. ।

[e]) तस. उप. पाप्र. √दृश् + शः प्र. (पा ३,१, १३७) अच्कौ (पा ६, २, १५७) इत्यत्र श-प्रत्ययस्यापि उसं. अन्तोदात्तत्वं द्र । अथवा स्वतन्त्रात् सतः √पश् इत्यतः कर्तरि वा भावे वा कृत्यः प्र. । नञ्-पूर्वत्वे च पूर्वे कल्पे कृत्योकीयोऽन्तोदात्तः (पा ६,२,१६०) । उत्तरे च कल्पे तावद् बस. अन्तोदात्तः (पा ६, २, १७२) इति विविक् ।

[f]) तस. नञ्-स्वरः ।

[g]) शोधः अप√बाध् > ?अपबाधत टि. द्र. ।

[h]) नाप. (उपधान-[नभा. तकिया]) । उप. अधिकरणे अच् प्र. थाथादि-स्वरश्च । W. उप-श्रयु- इति शोधुकः (तु. कौउ.)। सपा. कौउ १, ५ उपश्रीः इति, शांआ ३, ५ ?अपरश्च यः इति च पाभे. ।

[i]) सस्व. कृते तु. टि. अप-शुष्क- ।

-†तम् ऋ ⌊१, ८४, १४; (५.६१, १९)⌋; मै २, १३, ६; काठ ३९,१२; कौ २,२६४; जै ३,२२, ११; शौ २०, ४१, २; -तौ शौ ६,१२७,२[a].

१अपस्-, २,३अपस्- √*अप् द्र.

अप-सं√विश्, अपसंविशस्व[b] पै १६,७८,७.

†अप-सं√वृत् > वर्ति, अप…संवर्तयति ऋ १०, १७२, ४; कौ १, ४५१; जै १, ४७, ५; शौ १९,१२,१.

¶अप-सत्य[c]- -त्यम् क ३५, २; -त्या३म् काठ २२,८[d].

अप√सश्च्, ‡अप……सश्चिम[e], अप(सश्चिम)[e] मा ३८, २०; का ३८,५,३; मै ४,९,१०.

अप√सह्, अप…सहताम् पै ४, ८, १-१३.

φअप-साह्लस्[f]- -†ह्लान् ऋ ९, १०५,६; कौ २,९६३.

अप√साध् > साधि, अप…साधय पै ११,३,३[g].

अप√सिध्, अपसेधति शौ २०, १३५,१३[h]; अपसेधन्ति शौ ५, १९,९; अप…सेधसि शौ ६, ८१, १‡[i]; पै १९ १७, १; अपसेधामि शौ ८, २ ११; पै १६ ४,१; अपसेधतु खिसा २९, ८; अप…सेधतु ऋ १०,३६,४; पै ७,५,७; अपसेधन्तु ऋ १०, १००, ८; †अपसेध ऋ ६,४७, २९; मा २९, ५५; का ३१, २, १२; तै ४,६,६,७; मै ३,१६,३; काठ ४६, १; शौ ६, १२६, १; २‡[j]; पै १५, ११, ९; २०, ३‡[k]; अप…सेध ऋ ८, ६०, २०; १०, २५, ७; अप…सेध ऋ ८ ७९, ९[?]; †अप[?]…सेध ऋ १०,९८, १२; मै ४, ११,२; काठ २, १५; अप…सेधतम् मै ४, १४, ६; शौ ४, २५, ४[l]; पै ४, ३४, ६; अप (सेधतम्) शौ ४,२५, ४[m]; पै ४, ३४, ६; अपसेधत ऋ ⌊८, १८,१०; १०, १७५,२⌋; खि ५, २१, ३[h]; कौ १,३९७†; जै १,४४, ७†; †अप(सेधत) ऋ ८,१८,१०[?]; १०,१७५,२;१०; कौ १,३९७[?]; जै १, ४४,७[?]; अप…असेधत् ऋ ६, ४७, २१; अप…असेधः ऋ ५,३१,७.

अपसेधिरे; अपसेधिम खिसा२९, ९; अपसेधम् पै १९,१,१०.

---

a) सपा. पै १,९०,२ अपाकृतौ इति पाभे. ।

b) सपा. शौ ९,२,२५ अभिसंविशस्व इति पाभे. ।

c) विप. (अग्नि-) । मलो. बस. ।

d) अचेष्टा३अपसत्या३म् इत्येवं मूलतः सति पाठे प्लुतेः प्रथमाया उपर्यु आद्यकारस्य स्थाने सु इत्येवमाकारो श्रेषः द्र. ।

e) तु. माश १४,३,१,१९ यतो वाक्यद्वयस्य मिथ्याऽऽभासमिव गृहीतवन्तौ उ. म. च द्वेषः इति ह्वरः इति च द्वि१ सती प्र१ इति कृत्वा अप (=अपगच्छतु) इति च अन्युव्रत- इति देवतापरमिति च व्याचक्षाते तद् विमर्शाक्षि द्र. । सपा. °सश्चिम, अप(⌊सश्चिम⌋ माश १४,३,१,१९ तैआ ४,११,४ च) <> ऋ ५,२०,२ अप[?]⌊यद्र.⌋ इति सश्चिरे इति च पाभे. ।

f) गस. क्वस्वन्ते कृत्-स्वरः प्रकृत्या (पा ६,१,१९) । सह्लस्- इति पपा. । हे इन्दो! कंचिद्(=अपि सर्वम्) अदेवमत्रिणम् आ-साह्लान्(भव ⌊तु. नापू. ऋक्⌋) बाधश्(च) परि(-साह्लान् भव) द्वयुं (च) यनि. (भव) इति वाक्यत्रयात्मकः वा. द्र. [तु. ऋ ८, ४५, ४० यत्र अप इति परि इति च नि. यक. भिन्धि, जहि > ही इत्येते क्रिप. उपसृजन्तौ विज्ञपयेतां यथा प्रकृतेऽपि तौ नि. च आ इति च क्रियार्थप्रधानं साह्लान् इति पदमुपसृजेयुरिति (अस्मत् इति पं. च वारणार्थेऽप्सितवचना द्र. ⌊पा १, ४, २७⌋) । यद्वेने नि. कप्र. एव स्युः यक. द्वयुम्, बाधः, अस्मत् इत्येभिः पदैर्युक्ताः [तु. सस्थ. ? φआ(साह्लस्- > -ह्लान्), १φपरि-साह्लस्- > -ह्लान् (यत्रापि वैतु. PW. प्रमृ. भिन्नप्रकारकस्य वा. आलोचनम्); वैतु. वें. सा. साह्लान् इति चाध्याहृताऽऽख्यातांऽशं क्रिप. (=अप ⌊युयोधि- =अपगमय⌋) इति च (नितान्तमरुच्चिरा सती तदीयाऽवान्तरवाक्यकृतिराकरतः द्र.)] ।

g) पाभे. शौ १९,३४,२ अप…शालय द्र. ।

h) सपा. आगृ २,१,४ अपबाधताम् इति पाभे. ।

i) सपा. तैब्रा २,४,१,६ आश्रौ २, १२,३ प्रमृ. सेधति इति पाभे. । j) पाभे. ऋ ६,४७,३० अपप्रोथ द्र. ।

k) सपा. ऋ २,३३,३ रपसो युयोधि इति विभे. ।

l) वैतु. सा. अप+इतः (<√इ) इति । नितरां चिन्त्यं त्वेतत् । इतः इत्यस्याऽनिहतस्य सतः क्रिप. एतदित्यस्य वचसः संस्कारच्युतिमात्रत्वे सति मपु२ इति कृत्वा व्याख्यानप्रवृत्तेः साहसमात्राऽनतिरिक्तत्वादिति । इतः इति तसि-प्रत्ययान्तं द्र. ।

m) सपा. पै ४,३४,७ परा (सेधतम्) इति पाभे. ।

१अर[a]– > †अरम्[b] ऋ १, ६६, ३;७०,३; १०८,२;१४२, १०; १७०,४; १७३, ६; १८७, ७; २,५,७;८; १७, ६; १८,२; ३, ३५, ५; ४, ३२, २४[१]; ३३, २; ५,४४, ८; ६६, ५; ६, १३, ४; १६, ४३; ४१, ५; ६३, २; ७४, १; ७, ७, ६; ६६, १४; ६८, २; ८६, ७; ८, १५,१३; [४५,१०; ९२, २६]; ४६, १७[०]; ८२, ३; ९२, २४[१]; २५[१]; [२५; ९, २४,५]; [(४५, १०) २६[१]]; २७; १०, ९, ३; ६३,६; ७१,१०; ९६, ७; ९७, १८ ; १०१, २; १०६, ८; ११७, ३; मा ११, ५२; १२, ९२; १३, ३६; ३६, १६; का १२, ५, ३; १३, ६, १८; १४, ३, १०; ३६, १, १६; तै ४,१, ५, १; २, ९, ५; ५, ६, १, ४; ७, ४,११, ४; मै २,७, ५; १७; ४, ९, २७; ११, २; काठ ११, १२; १६, ४; २२, ५; ३५, ३; ४०, ८; कौ १, २५; ११८[१];२०९$[१];२, ३१४; ७३३; १०१२[१]; ११८९; जै १, ३, ५; १३,४[१]; २२, ९[१]$; ३,२५, १०; शौ १, ५,३; २०, ३१,२; पै १, १०९,३; ६,१६, ७; १२, ३, १६$; १७, ६,१; १९,४५,१०.

अरं √कृ[d] > †अरं-कृत्[e]– -कृतः ऋ [१, १४, ५; ८, ५, १७]; काठ ५, १![f]; –कृतम् ऋ ८, १, १०; कौ १, २९५; जै १, ३१,३; –कृते ऋ २, १,

४र्थः सामीप्यार्थः अराल–, अर्व्–, अर्वन्–, अर्वाञ्च– इत्येतेषु ;

५मः शब्दार्थः अर्क– इत्यत्र;

६ष्ठः हिंसार्थकः मौस्थि. √*२ घृ > √*२हृ इत्येतत्परिणतः सन् *अर्– : अराट्की–, १अराय–, अराड–, अराड्य–, अरावन्–, अरुस्–, √अर्ग् इत्येतेषु;

७मः रक्षार्थः *६अर्–, अराय्–, अराय्य्–, इत्यत्र;

८मश्च वलनार्थः १अरत्नि–, अराल– इत्यत्र। ननु भोः कथमेकस्य धा. एतावान् परस्परविविक्तार्थ-विस्तर इति । अर्थवैशिष्ट्यं नाम प्रथमो हेतुः । इममेव प्राञ्चः 'धा. तदर्थाऽतिशयेन योगः' इति कृत्वा पञ्चमनिरुक्तप्रकारतयाऽऽहुः । अथ नैप्र. वर्णपरिणामो द्वितीयो हेतुः। एतद्-विषयीभूता मौस्थि. भिन्नध्वनिमन्तोऽपि सन्तोऽनेके धा. समयेनाऽभिन्न-ध्वनयो भूत्वैकाऽऽत्मतामिव संप्राप्ता एकवृन्तगता-ऽनेकफलत्वस्य निदर्शनं भवन्तीति । एस्थि. किमित्युक्तो-भयहेतुजन्मानः समानध्वनिभाजोऽपि बहुत्वमापन्ना एते धा. इह पृथङ् न निर्दिश्येरन्निति । बाढम् । अन्ततोगत्वा वैश. पार्थक्यमेव शरणं भवेत् न त्विह वैप. इति । कुत इति । वैप. प्राधान्येन तथाध्वनिशब्दस्वरूपमात्र-परत्वाच्च प्रकृतौपयिकविचारसामग्र्या भूयस्तरामिवाद्यापि परिणिष्ठेयकल्पत्वाच्चेति । एवमन्येषामपि धा. वैश. विभेदार्हाणां सतामिहाऽभेदनमुपपादनीयमित्यपरा दिक् ।

[a]) अप् प्र. (पा ३,३,५७) । तस्य च पित्त्वान्निघाते धास्व. ।

[b]) सर्वत्र वा. क्रिवि. (तु. वें प्रमृ ; वैतु. PW. प्रमृ. नाउ. टि. विषयभूतेषु स्थ. गतित्वेन योजुकाः) इति कृत्वाऽव्यभिचारेण न. द्वि१ सद् असमासे अव्य. इत्यु-पचर्यते (तु. पाग १,१,३७ यत्र वर्णभेदेन यनि.> अलम् इति तयोपचर्यते) । तदेव च नाउ. पदान्तरेण समासवृत्तिमनुप्रविष्टं सद् यथायोगं गश. द्र. (तु. अरं √कृ प्रमृ , उपारु- ) ।

[c]) तु. सस्थ. टि. √इष् (बधा.) > इषे ; वैतु PW. Gri. प्रमृ. अरम्-इष्- इति समस्तं मन्वानाः ?

[d]) कृद्वृत्तप्रयोजन-प्रधानो निर्देशः द्र. । तिङ्वृत्तस्य मृग्यत्वात् (तु. पपा. ऋ २,५,८; ४,३३,२ यत्राऽव्यवहिते यद्वृत्तीयस्वरवति तिङि परतोऽपि अरम् इति पृथक्-स्वरतया पृथक्-पदं भवति इतीव कृत्वा सर्वत्राऽस्य पदपार्थक्यमेव प्रादर्शि ; वैतु. PW. प्रमृ. अना-दृतस्वरविवेकाः सन्तः गपू. स्थ. अपि ऋ ५, ४४, ८ प्रमृ. [ √कृ इत्यत्र यस्थ. द्र.] अन्येषु स्थ. चाऽपि ग. भावयन्तः । यत्तु भूषणे (पा १, ४, ६४) इत्यत्राऽर्थविशेषे मध्यं लब्धवापन्नस्य अरम् इत्यस्य गतित्वमनुशिष्टं भवति, तद् अवेदपरत्वेन व्याख्येयम् । वेदे पर्याप्तिमात्रे भूषणत्वप्रकारतयाऽपर्यव-सन्ने वृत्त्युपलम्भात् ।

[e]) गस. कर्तरि क्विबन्ते कृत्-स्वरः प्रकृत्या ।

[f]) वा.? यनि. यज्ञः इत्यस्य विप. संभाव्येत । अथ अरं-कृत्– इत्यस्य द्वि३ सद् देवान् इत्यस्य विप. इत्यपि विमृश्यं द्र. ।

७; ८,६७,३.

अुरं-कृत,ता- -तः ऋ १०,१४, १३; ११९, १३; शौ २,१२, ७; १८, २, ११; पै २, ५, ८; -तम् शौ १२, १, २२; पै १७,३,३; -ता पै १९, २१, ६; -ताः ऋ १,२,१. [°त- सु°].

अुरं-कृति- -तिः ऋ ७, २९,३.

अरं-कृत्य>त्या ऋ १०, ५१,५.

अरं√गम्[a] > अरं-गम[b]- -मः तै ५, ६,१,४; मै २, १३, १; काठ ३५, ३; ३९, २; शौ ३,१३,५; पै ३,४,५; -†माय ऋ ६,४२,१; ८, ४६, १७; कौ १,३५२; २, ७९०; जै १,३७, १; -मासः शौ १३,२, ३३[c]; पै १८,२३,९.

अरं√गॄ(शब्दे)>अरं-गर[b]- -रः शौ २०,१३५,१३[d].

अरं√घुष् > अरं-घुष[e]- -षः शौ १०,४,४.

१अर[f]- -रम् काठ ३४, १७; -राः ऋ ५, ५८, ५; १०, ७८, ४; खि ४, ११, ५; मा ३४, ५; मै ४, १४, १८; काठ १०, ४[२]; शौ ३, ३०, ६; १०, ८, ३४; पै ५, १९, ६; १६,३१,३; १५२, १; -राणाम् ऋ ८, २०, १४; -†रान् ऋ ⌊१, ३२, १५; १४१, ९⌋; ५, १३, ६; ८, ७७, ३; तै २, ५, ९, ३$; मै ४, १४, १३; पै १३,६,१५. [°र- अव°, अष्टन्°, त्रि°, त्रिंशत्°, द्वादशन्°, पञ्चन्°, प्रति°, षष्°, षोडशन्°].

अर-मणस्[g]- -णसम् ऋ ६, १७, १०.

अरितृ[h]- -ता ऋ २, ४२, १; ९, ९५,२.

१†अरित्र[i]- -त्रम् ऋ १, ४६, ८; -त्राः ऋ १०,४६,७; मा ३३, १; का ३२,१,१.

२अरित्र[j]- -त्राणि शौ ५, ४, ५; पै १९, ८, १३. [°त्र- दशन्°, नित्य°, शत°, सु°].

अरित्र-पुर(ण>)णी[k]- -णीम् ऋ १०, १०१,२

¶अुतोंस्(:) काठ ९,१६.

√*अर्(संसर्गप्रतिबन्धे)>१अरण- आ°.

√*अर्(स्तुतौ)>३अरि- आ°.

√*अर् (पूजायाम्) > ३ अर- आ°.

१अुर-, २अर- *अर् द्र.

४अर- √ऋ द्र.

?अरक[l]- -कः खि ५,१५,५.

---

a) तु. टि. अरं√कृ ।

b) गस. कर्तरि अजन्ते थाथादि-स्वरः ।

c) विप. (प्रवत्-) इति कृत्वा स्त्री. द्वि२ इति W., L ⌊३६३⌋ ।

d) सपा. खि ५,२१,३ आरंगरः इति पाभे. ।

e) गस. उप. कर्तरि कः प्र. थाथादि-स्वरश्च (पा ६,२, १४४) ।

f) व्यु. ? अ + *रा- (< भावे √*ऋ ⌊तु. ऋदन्तेभ्यः धा. समाननिष्पत्तिकानि प्राति. *घ्रा-, *त्रा-, *द्रा-, *ध्रा-, *म्रा-, *व्रा- प्रभृ.⌋) इति कृत्वा बस. अन्तोदात्तः (तु. टि. १अुरण-; पा ६, २, १७२) । चक्रनाभिनेमिगतस्वस्वस्थानाधिकरणकतत्स्थैर्यपर्यवसानके तत्संसर्ग-राहित्ये तात्पर्यम्; वैतु. गतिप्राप्तिसामान्यमादाय या ⌊४, २७⌋ प्रभृ. √*अर् ⌊प्राप्तौ⌋ + अच् इतीवाऽभिप्रयन्तः; WW ⌊१,६९⌋ गतिराहित्याऽऽख्यं गुणं पश्यन्नप्याद्यमकारमुच्चारणार्थकमात्रतया प्रतिपन्नः ।

g) बस. पूप. प्रकृतिस्वरम् (पा ६, २, १) । उप. < √मन् । अत्र पूप. अुरम् इति मतमसद् भवति (तु. वें. PW. प्रभृ.) । तथात्वे हि यनि. स्वरस्याऽनुपपत्तेरर्थासंगतेश्च । वज्रम् इत्यनेन पराभिमतस्य संबन्धस्याऽपेक्षया (तु. PW.) अुहिम् इत्यस्य विप. इत्येव मन्त्रस्वारस्यं नेदीय इव स्पर्शुकमिति दिक् (तु. सा.) ।

h) नाप. (⌊ईरयितृ-⌋ नाविक- ⌊तु. या ९,४⌋) । तृच् प्र. चित्-स्वरश्च (पा ६,१,१६३) ।

i) विप. (⌊प्रेरयितृ-⌋ अग्नि-), नाप. (⌊नौकाचालनसाधन-⌋ काष्ठ-विशेष-) । कर्तरि करणे च इत्रः प्र. (पा ३,२,१८४) । तत्-स्वरः ।

j) आद्युदात्तार्थं प्र. नित् अवधेय इति नापू. विशेषः ।

k) विप. (⌊अरित्रेण पारयितव्या-⌋ नौ-) । उस. कृत्-स्वरः प्रकृत्या (पा ६, २, १३९) । उप. अन्तर्भावितण्यर्थात् √पॄ+कर्मणि ल्युट् प्र. ।

l) पाठः? संटि. च *अुजक- टि. च द्र. ।

†अ-रक्षस्[a]- -क्षः[b] ऋ ५, ८७, ९; -क्षसः ऋ १, १९०, ३; -क्षसम् ऋ ७, ८५, १; ८, १०१, ८; -क्षसा ऋ १, १२९, ९; २, १०, ५; मा ११, २४; का १२, २, १३; तै ४, १,२,५; ५,१, ३, ३; मै २, ७,२; काठ १६, २; १९,३; क ३०,१.

¶अ-रक्षोहत[c]- -तः[d] तै ६, १, ७, ३[२]; -तम् मै १, १०, २०[e]; काठ ३६,१४.

¶अ-रक्षस्य[f]- -स्यः[d] मै ३, ७, ७; ४,८,५.

अरगराट[g]- -टेषु शौ ६,६९,१.

अ-रज्जु[h]- -ज्जुभिः ऋ ७,८४, २; -ज्जौ ऋ २,१३,९.

अरट्व[i]- -ट्वे ऋ ८,४६,२७.

१अरण[j]- -णः ऋ २, २४, ७; ५, २, ५; ६, ७५, १९; ७, ४, ८; खि ४, ५, ३७; काठ २, ११; क २, ५; कौ २, ११२२†; शौ १, १९, ३†; ५, १०,२; ७, ११३, १; पै ९, १३, २; १०, ११, १; १३, ३, १४; -णम् ऋ ३, ५३,२४; ५, ८५, ७; ८, ४, १७; १०, ११७, ४; काठ ३१, १४[k]; शौ ५, २२, १२; पै ६, २२, १७; ८, १२, १०; -णस्य ऋ ७, ४,७; मै ४, ६, ६; -†णाः ऋ ८, १, १३; शौ २०, ११६, १; -†णानि ऋ ६, ६१, १४[l]; तै ७, २, ७, ५[२]; काठ १७, १८; ३०, ३[२];$; क ४६, ६[२];$; -णाय मा २६, २; का २८, १,३; शौ ६, ४३, १; पै १९, ३३, ७; -णे ऋ १०, ६३, १६; -णेभिः शौ ७, ५४, १; -णेभ्यः खि ५, १, २; मै २, २, ६; काठ १०, १२; पै १९,१५,५. [°ण- आ°, उद्°, सम्°].

?१आरण[m]- -णाय[n] मै ३,१४ २०.

१अरण्य[o]- -ण्याय[n] मा २४, ३९; का २६,८,४; तै ५, ५,१६, १, काठ ४७,६.

---

[a]) विप. (पथिन्-, मनस्-, मनीषा- प्रभृ.)। बस. अन्तोदात्तः (पा ६,२,१७२)।

[b]) विप. (हुव- न.) इति GW. GRV. प्रभृ. (वैतु. वें. सा. अन्यथावदौ)।

[c]) विप. (पथिन्-, मध्यम-पर्ण-)। तस. नञ्-स्वरः। उप. तृस.। [d]) पाभे. २अपरिपरः काठ २४,६ द्र.।

[e]) अरक्षोहतम् इति मुपा. स्वरो भ्रष्टः।

[f]) विप. (पथिन्-)। तस. अन्तोदात्तः (पा ६,२,१५६)।

[g]) व्यु.? सा. २अर- + ?गर- *(<√गॄ [शब्दे]) + ?अट्- (<√अट्) इति उस. इव भावयन् स्वरतो मिथ्यात्वं प्रति पर्यनुयोज्यः। वाच्यस्याऽस्पष्टत्वाद् भूयोविमर्शस्याऽप्रतिहतोऽवसरः द्र.। [h]) विप. (सेतृ- [१मे स्थ.]), नाप (बन्धनागार- [सा. प्रभृ.])। सस्व. अ-रक्षस्- टि. द्र.।

[i]) व्यु.? प्रकरणात् व्यप. संभाव्येत।

[j]) विप, नाप.। व्यु.? √*अर् (संसर्गप्रतिबन्धे) + कर्तरि ल्यु>अनः प्र. लित्-स्वरश्च (पा ३,१, १३४; ६ १,१९३)। या. (३,२; ११,४६) अनु =अ (=अप) + ?१रण- [=ऋण- (तु. पावा ६, १, ८९; ऐब्रा ७, १३; यस्थ. स्क. दु. च) इति वा, =अर्ण- (MW.) इति वा, =√रम्> *२रण- इति वा] इति कृत्वा बस. इति वा यस्मिन् कल्पेऽन्तोदात्तः प्रसज्येत [पा ६, २, १७३]। नैप्र. *अपार्ण- (प्रास. पूप. प्रकृतिस्वरम्) >°अआर्ण- > *आर्ण- > यनि. इति वाऽभिसंधीयेत। अ + ?*२रण- (कर्त्रर्थे ?<√रम्) इति कृत्वा तस. पूप. प्रकृतिस्वरम् (पा ६, २, २) इत्यपरा काचित्की व्यु. (तु. वें. ऋ ६, ७५, १९ प्रभृ., सा. ऋ २, २४, ७; ६, ७५, १९; ७, ४, ८ प्रभृ.)। अथ ?*१अर्- इति परार्थे सना. इति कृत्वा ततः व्यु. पर्येष्व्येत्यपि मतं भवति (WW १, ८४)।

[k]) सपा. तैब्रा ३,७,६,७ अमतिम् इति पाभे.।

[l]) =सपा. तैब्रा २,४,३,२। मै ४,११,२ अरण्यानि इति पाभे.।

[m]) पाठः? पपा. हि १अरण्य- इति प्राति. प्रादर्शि (तु. मा २४, ३९ प्रभृ.)। यनि. तावदुभयी व्यु. संभवति ताद्धिती सामासिकी च [='अरणानाम् अग्राम्यप्रदेशानां राजा' इति कृत्वा तद्राजीयः अञ् प्र. ञसं. (पा ४, १, १६८) ञित्स्वरश्च। यद्वा 'आगतमधिकारेऽरणं यस्य' इति कृत्वा मध्यपदलोपः २आ-अरण- [यद्र.] इति बस. स्यात् पूप. प्रकृतिस्वरश्च (पावा २,२,२४; पा ६,२,१ [तु. आ-देव-])]।

[n]) सपा. आरणाय<>अरण्याय- इति पाभे.।

[o]) 'अरणेऽधिकृतः' इति कृत्वा तद्राजीयः ण्यः प्र. ञसं. (पा ५,३,११२) वृद्ध्यभावश्च [तु. द्विपू. टि.]।

१*२अरण[a]-

१अरणी[b]- -णी शौ ७, ११३, १; -णीम् ऋ १०,१२४,२.

२अरण्य[c]- -ण्यम् मा २५, ३; का २७, ३, २; तै ५, ७, ११, १; ¶६, २, १०, ७; ५, ११, २; मै ¶१, ९, ७; ११, ६; ¶२, १,६; ३, १५, ३; ¶काठ ९, १६; १४,७; ३०, १; ५३, १$; क ४६, ४¶; शौ १२, १, ११; ५६; पै ६, २२, १७; १७, २, २; -¶ण्यस्य मै ४, १, १; काठ ३०, १०; क ४६,८; -ण्यात् मै ४, १, १¶; काठ १९, ११¶; क ३१, १¶; शौ २, ४, ५; पै २, ११, ५; ६, २२, १७; -ण्यानाम् मा १६, २०; का १७, २, ४; तै ४, ५, ३, १; मै २, ९, ३; काठ १७, १२; क २७, २; -ण्यानि ऋ १०, १४६, १?[d]; मै ४. ११, २‡[e]; पै १७, ६, ४; -ण्याय तै ७, १, १७, १; काठ ४१, ८; -ण्ये ऋ ६, २४,१०; खि ७, १,१[f]; मा ३, ४५; २०, १७; का ३, ५, २; २२, १,४; तै १, ८, ३,१; ¶२, १, १०, २; ५, १, ६; मै १, १०,२; २०¶; २, ५, ५¶; काठ ९, ४; ¶२१,९[g]; ¶३०, १०; ३८, ५; क ८, ७; ४६, ८¶; पै १, ९९, ३; -†ण्येषु ऋ १,१६३,११; मा २९,२२; का ३१, ३, ११; तै ४,६,७,४; काठ ४६,३. [°ण्य- अन्यतस्°].

आरण्य,ण्या[h]- -ण्यः मा ६, ६; २४, ३०; ३२; ३८; का ६,१ ७; २६, ६, ५; ७,२; ८,३; तै २, १,१०,२¶; ५,५, १२, १; मै २, ५,५¶; ३,१४, ११; १३; काठ ४७, २; पै १५, १२, ७; -ण्यम् मा १३, ४८-५१; का १४,५,२-५; तै १,६, ७, ४¶; ४,२, १०,१; २; ३[2]; ४; ¶५, २,८, ६; ९, ३; ५$; ४, ५,२; ¶मै १,४, १०; ६,५; ११,८; २, ७, १७[5]$; ३, २, ५; ४, ३; १०; ४, ४, १; काठ १२, ७; १६, १७[4]; २०, ८; २१, ६; २९, ८; ३२, ७; क २५, ८[4]; ३१, १०; २१¶; -¶ण्यस्य तै १, ६, ७, ३[2]; मै १,४, १०; काठ ३२,७; -ण्याः मा १४, ३०; १८, १४; ३१, ६‡; का १५, ९,४; १९, ५, २; ३५, १,६‡; ¶तै १, ६,७, ३; २, ४, ६, २; ३, १, ४, २$; ४, ३, ५; $४, ३, १०, २; ७, ५, २; ५, १, ४, ३; २, ५, ५; ९, ५; ४, ९, २; १२, २; ६, १, ८, १; ३, ७, ५;५, ११, २; ७, २, २, १; ३, ४, १; ¶मै १, ६, ५; $२, ८, ६; ११, ५; ३, २, ३; ९, ७; ४, ३, २[1]; काठ ७, ८; १२, ७; १३, १२; १७, ५; १८, १०; २०, ३; २८, १०; २९, ८[2]; ३०, ८; ९[1]; ३५, १५; क २६, ४¶; २८, १०; ३१, ५¶; ४५, १¶; शौ ५, २१, ४; ६, ५०, ३; ११, २, २४; ७, २१‡; ८,८; १२, १, ४९; १९, ६,१४‡; पै ३, ३२, ६; ५, २२, ५; १५, १३, ८; १६, १०६, ४; १५५, १; १७, ५, ७; -ण्यात् काठ २५, ५; ३०, १०; क ३९, २; ४६, ८; -ण्यान् ऋ १०,

---

[a]) व्यु.? √*अर् (तपनदीप्त्योः) + करणे ल्युट् प्र. लित्-स्वरश्च (पा ३,३,११७;६,१,१९३ [=ज्वलनपरिणामितापजनने करणम्]) । अग्न्युत्पत्तिकारणताविशिष्टे तात्पर्यदर्शने सदृशः सन्तोऽपि √*अर् (गतौ) इत्यतः व्यु. आहुः या. (५, १०) प्रभृ. । यत्तु या. मतमुदाजिहीर्षुरपि सन् MW. यनि. नापू. सरूपात् प्राति. अभेदमाह, तन्मन्दम् । या. मतमनु मौस्थि. च तयोः प्राति. पार्थक्येन निर्देशार्हत्वात् ।

[b]) स्त्री. ङीप् प्र. (पा ४,१,१५) स्वरेऽभेदकरः ।

[c]) स्वार्थिकः यप् प्र. उसं. [पा ५, २, १२० (तु. या. [९, २९] दे. [५, ३] यौ १अरण- इत्येतदीयां व्यु. एवाऽतिदिशन्तौ तस्मादभेदमिव यनि. तद्धितगम्यं प्रतिपादुकौ भवतः [तु. ऋ ६, ६१, १४ यत्रत्यस्य १अरण- इत्यस्य स्थाने मै ४, ११, २ इत्यत्रत्यः २अरण्य- इत्यात्मकः पाभे. अपि यनि. व्यु. श्रौतं लिङ्गं स्यात्]; वैतु. पाउ [३,१०२] √*अर् [गतौ] + अन्य [न्] प्र. इति निर्माध्यमा व्यु. इति)]।

[d]) द्विरुक्त्योः सरूपयोर्मध्य एकं यनि. द्वि३ एकं च १अरण्यानी- (तु. टि.) > सं१ (तु. या. [९, ३०]) इति वोभे अपि रूपे द्वि३ इति वेत्यत्र भूयोऽपि विमृश्यताम् । [e]) पाभे. अरणानि ऋ ६,६१,१४ द्र. ।

[f]) सपा. खिसा ६,१; १३,१ इरिणे इति पाभे. ।

[g]) सपा. मै ३,३,९ वनेषु इति पाभे. ।

[h]) तात्रभविकः णः प्र. (पावा ४,२,१०४) तत्-स्वरश्च ।

१०, ८?[a]; ¶तै १, ६, ७, ३; २, ५, ११, २; ५, १, ४, २; २, ९, ५; ६[२]; ४, ३, २[१]; ५, ५, २; ६, ६, ४, ५; ७, ३, १४, १$; ¶मै १, ४, १०[२]; ३, १, ५; २, ७; ३, ६; ४, ४, ६; ८, ८[१]; ¶काठ १९, ५; २०, ५; ८; २१,७; २८, १०; ३२, ७[२]; ४३, ४$; ¶क ३०, ३; ३१, ७; १०; ४५,१; पै ९, ५, १२?†[a]; -ण्यानाम् तै ५, ४, ३, २; काठ ३७,४; -¶ण्येन मै १, १०, २०[२]; ३, ३,४; काठ २१, ६; ३६, १४; क ३१, २१; -ण्येभ्यः काठ २६, २; क ४०, ५; -ण्येषु तै ५, ४, ४, ३¶; -ण्यैः शौ ३,३१,३.

अरण्यानि[b]- -निः ऋ १०, १४६, २; ३; ५; -निम् ऋ १०, १४६, ६; -न्याः शौ १२, २, ५३; पै १७, ३५,३; -न्याम् ऋ १०,१४६,४.

?अरण्यानी[c]- -ऽनि ऋ १०, १४६,१?[d].

¶अरण्ये(ण्ये-अ)नुवाक्य[e]- -क्यः मै ३, ३, १०[४]; काठ २१, १०[१].

१अरणि[f]- -णयः पै १३, ३, ३; -णिभिः ऋ १, १२७,४;१२९, ५; -¶णिभ्याम् मै ३, ६, ९; -णी ऋ १०, १८४, ३; मै १, ८, ९¶; ¶काठ ८, १०[१]; २३, ६; २६,३;७; ¶क ७,६[१]; ४१,५; शौ १०,८,२०; पै १६, १०२, ७; -ण्योः ऋ ३, २९, २; ७, १, १; ¶तै ३, ४, १०, ४-५; †काठ ३४, १९; ३९, १५; †क ४८,१; †कौ १,७९; ७९;२,७२३; †जै १,७, १०;८, ७; ३, ५९, १५; पै ११, १,३.

?२अरणी[g]- -णी ऋ ५, ९,३.

a) पाठः (तु. तैआ ३, १२, ४)? आरण्याः इति शोधः (तु. मा ३१, ६ प्रमृ.; ऋ १०,९०,८ वायव्यान् टि. च)।

b) व्यु. ? १अरण्य- + (√जन् > जनि- > ज्नि*->) *ग्नि- (=ग्ना- यद्र.) इत्येवम् 'अरण्या (=अरणेधिकृता) ग्निर्माता' इति कृत्वा कस. सास्व. च । एस्थि. उप. गकारस्य नैप्र. नकारसमापत्तौ *अरण्यन्नि-> यनि. इत्यभिसंधिः (तु. या. [९, ३०] यत्र अरण्यपत्नी- इति शब्दः व्यु. ग्ना- इत्यनेन कमपि मौस्थि. संबन्धं संकेतयेत्; वैतु. सा. ऋ [१०, १४६, २] नाउ. ?अरण्यानी- इत्यस्य ह्रस्वाऽऽपत्त्या सिषाधयिषुः सन् मौस्थि. व्यु. व्यत्यासुकः [जनि->*जनी- इति परिणामक्रमो भवति न तु *जनी->जनि- इत्यभिसंधेः])।

c) ङीष् प्र. (पावा ४,१, ४५; वैतु. पा ४, १, ४९ आनुगागमपूर्वकम् १अरण्य- [?] इत्यतः प्र. इति)। तत्-स्वरः। एस्थि. उप. दीर्घान्तमित्येव नापू. विशेषः। यद्वा मौस्थि. ङीषन्तेन सतैव उप. नापू. दिशा स्वनन्त्रः कस. द्र.।

d) तु. सस्थ. टि. १अरण्य->-ण्यानि। यस्त्वेकं रूपं द्वि३ एकञ्च सं१ स्यात् (तु. या. वें. सा. च; वैतु. GW. NW. चोभे अपि रूपम् सं१ इति, ORN. चोभे अपि द्वि३ इति)।

e) विप. (अरण्ये गत्वाऽध्येतव्याऽनुवाकाम्नात-गण- [तु. भा. [तैब्रा १, ७, ७,३] PW. प्रमृ. च])। उस. उप. ण्यत् प्र. कृत्-स्वरश्च प्रकृत्या (पा ६, १, १३९ [तु. वैप२ आरण्येऽनूच्य- इति यत्र कृत्यः क्यप् प्र.])।

f) नाप. [(अश्वत्थावरोहिवृक्ष-निर्मित- [तु. पै १३, ३, ३] अग्निमन्थनसाधन-उत्तराधरात्मक-काष्ठद्वय-)]। व्यु. ? √*अर् (तपने वा दीप्तौ वा) > *३अर- (=अग्नि-) + जनि- (=प्रादुर्भाव-) इति कृत्वा बस. पूर. प्रकृतिस्वरम्, नैप्र. वर्णलोपः शकन्ध्वादित्वञ्च द्र. (तु. ?*२अरण- [तेजोहिरण्यवैशिष्ट्यञ्च निर्मन्थनक्रियायोगश्चाप्यत्र श्रौतं लिङ्गम् ऋ १, १२७, ४; १२९, ५; १०, १४८, ३]; वैतु. या ५, १०, तदनु पाउ २, १०२, ते ते प्रागवग्भिर्वो विवृतत्व <√*अर् [प्राप्तौ] कृत्वा संभेदुकवृत्तय इव)।

g) यनि. सत्तातः संदेहो भवति । कथमिति । स्वरतश्च संबन्धतश्चाऽनुपपत्तेरिति । तथाहि । स्वरतस्तावत् । नापू. + ङीष् प्र. (पावा ४, १, ४५) इति कृत्वाऽन्तोदात्तप्रसङ्ग इति । अथ संबन्धतः । प्र१ इति कृत्वा हि PW. GW. प्रमृ. जनिष्ट इति इति क्रिप. अस्य संबन्धमाहुः । तन्नोपपद्येत । अरण्या अग्नेः प्रादुर्भावयितृत्वे सति स्वतस्तत्कालिक्याः क्रियाया योगतः प्रादुर्भवितृत्वाऽभावात् । ननु ण्यर्थे क्रिप. एतदिष्येतेति । नेति । कथमिति । श्रुतिलिङ्गतः सामर्थ्याऽभावात् । दाशतय्यां हि

**२अ-रणि,णी**[a]- -णिम् शौ १, १८,२; पै २०,१७,९; -णीम् पै २०,१८,८.

**?अरणीयमान**[b]- -नः मै ४, ९, ५.

**१,२अरण्य-, अरण्यानि-** १,२अरण- द्र.

**१अरति**[c]- -तये ऋ ७,५,१; -†तिः ऋ १, ५९, २; ⌊१२८, ६; (८, १९, १; ३९, ६)⌋; २,२, २; ४, २; ४, २, १। ६, ३, ५; १२,३;६७, ८; १०, ३, १; २; ६; ७; ४५, ७; ६१, २०; मा १२, २४; का १३, २, ७; तै ४, २, २, २; मै २, ७, ९; ४, १४, १५[२]; काठ १६, ९; कौ २,८९६;८९७; जै ४, १३, ९; १०; -तिम् ऋ १, ५८, ७, ⌊१२८, ८ (५, १, ७; ६, १४,२) ७, १६,१⌋; २, २, ३; ३,१७, ४; ४, १, १; ३८, ४; ६,७, १; १५, ४; ४९, २; ७, १०,३; ⌊(१,१२८,६) ८, १९, १ (३९, ६)⌋; २१; १०, ४६, ४; मा ७, २४; १५, ३२; ३३, ८; का ७, १०, १; १६, ५, १४; ३२,१,८; तै १, ४, १३, १; ४,४, ४, ४; ६, ५, २, १; मै १, ३, १५; २, १३, ८; ४, १३,५; १४,३; काठ ४,५;१८, २१; २८, १; ३९, १५; क ३, ५; कौ १,४५; ६७; १०९; २, ९९; ४९०; १०३७; जै १, ५, १; ७, ५; १२, ३; ३, १०, १; ३८,४; ४, २९,३; पै २०, ९, ४†; -तीन्[d] मै २, ६, १२; काठ १५,८.

**?२अरति**[e]- -तौ ऋ ५, २, १; पै १८,२५,७†.

स्वरभावाऽभावाभ्याञ्चाऽङ्गभावाऽभावाभ्याञ्च चतुर्धा व्यूढस्य सतोऽस्य क्विप. २० निगमा भवन्ति। तेषु मध्ये १९ निगमेषु ण्यर्थाऽभावे विप्रतिपत्यभावात् प्रकृते विंशे निगमेऽपि ण्यर्थो नैव संभाव्येतेत्यर्थात् यनि. रूपम् नापू. एव प्र२ इत्येवं प्रतिपद्य क्विप. तत्परतया वचनव्यत्ययं चिकारयिषन्तौ वें. सा. प्रत्यपि ण्यर्थविषये समानं चोद्यं द्र.) इति। अरण्याः कर्तृत्वे प्रतिहते कथं वा. इति। उच्यते। अत्र नवो जनिष्ट अरणी इत्येवं मूलतः सतः पादस्य स्थाने वर्तमानः शोध-सापेक्षः पाठः द्र.। एतदनु ⌊यं > ⌋यः ⌊शिशुं > ⌋शिशुः, ⌊नवं > ⌋नवो, ⌊धर्तारं > ⌋ धर्ता अरं, ⌊अग्निं > ⌋अग्निः, ⌊स्वध्वरं > ⌋ स्वध्वरः इति द्वितीयान्तानां प्रथमान्ततया शोधः क्रियेत, अरणी इति च सप्त२ सद् अग्नि-प्रादुर्भावाऽधिकरणतया योज्येत (तु. ऋ ७,३,९; १०,३१,१० यत्र यक्र. मात्रोः इति पित्रोः इति पदे सपा. श्राव्येते, ऋ ८, ७, ५ यत्रत्ये चरमे पादेऽप्येवं जातम् इति प्र१ सत् कर्तृत्वेन अनु···अष्ट इत्यनेन क्विप. योज्येत रोदसी इति च सप्त. विषयेऽत्यन्तसंयोगकरणी द्वि. द्र.; वैतु. वें. सा. प्रभृ. रोदसी इति प्र२ इति कृत्वा वाक्यपार्थक्येन कर्तृतया योजुकाः)।

[a]) नाप. (आर्ति-, अलक्ष्मी- ⌊सा.⌋)। तस. नञ्-स्वरः (पा ६,२,२)। उप. <√रण् 'मोदे' (वैतु. सा. ⌊पक्षे⌋ <√*अर् ⌊प्राप्तौ⌋ इति)।

[b]) पाठः? च; अहुः। अनी। युमानः इति पपा. च? अहरहर्णीयमानः इत्यनुष्टुप्पादतया शोधः द्र. (तु. सपा. तैआ ६, ५, ३ अहरहर्नयमानः इति च; वैतु. तैआ ४, ४, १; ६, १ BC. अहर्णीयमानः इति च पाभे.)।

[c]) व्यु. ? √*अर् (प्राप्तौ) +अतिच् प्र. इति संप्रदायः [तु. पाउ (४, ६०), ते ते प्रागतर्ज्ञ्चो विवृतोऽर्थ-वैशिष्ट्ये सत्यप्येनां व्यु. अव्यभिचारुकाः; वैतु. VVS १०४ √*अर् इत्यतो निष्पादुकः, उ. म. (मा. यस्थ.) नैप्र.=*अलंमति- इति, म. (गपू.) भा. (तैब्रा २,५,४,४) अ+(√रम् >)रति- इति कृत्वा बस. अन्तोदात्तः (पा ६,२,१७२) इति]।

[d]) सपा. तै १, ८, १०, २ तैब्रा १, ७,४,२ अरातिम् इति पाभे.।

[e]) सा. (तु. यनि. स्थ.) अरमणीयप्रदेशाऽरण्यान्यतराऽभिधानं सत् नापू. सरूपात् प्राति. भिन्नमेतत् यनि. इतीव व्यु. भेदमपश्यन्नप्यभिसंदध्यात्। एवं BW. पाठः अशाधुरिति कृत्वा अ-रत्नि- इति प्राति. शोधतया ध्रियेतेति। न तु पृथक् प्राति. इहाऽपेक्ष्येतेति मतं भवति। नापू. प्राति. एव श्रुतिस्वारस्यस्य सुस्फुटत्वोपगमात् [जना अस्याऽनीकम् (अस्मिन्) अरतौ निहितं सन् न मिनत् (भवत्) पुरः पश्यन्ति (=क्षणमात्रमेव निहितमवतिष्ठते। क्षणेनैव च जनैस्तत् ⌊अस्मिन् न मिनत्=⌋ सर्वत्र संचरमाणं प्रत्यक्षीक्रियते)]।

१अरत्नि[a]- -त्निः तै २, ५, ७, ५¶; -¶त्निना तै ५, २, ५, १; -¶त्निम् तै २, ५,७,५; -त्नी मा २०, ८; का २१, ७, ७; मै ३, ११, ८; ४, ६, ३[2]¶; काठ ३८, ४¶; -त्नीन् शौ १९, ५७,५; पै ३, ३०,६; -त्नौ ऋ १०, १६०, ४; तै २, ५, ७, ५[2]¶; शौ २०,९६,४[1]; -त्न्योः पै १६,१४७,७. [°त्नि- अष्टन्°, एकत्रिंशत्°, एकविंशति°, एकादशन्°, त्रयस्त्रिंशत्°, त्रयोदशन्°, त्रयोविंशति°, दशन्°, द्वादशन्°, नवन्°, पञ्चदशन्°, पञ्चन्°, पञ्चविंशति°, षष्°, सप्तदशन्°, सप्तन्°, सप्तविंशति°].

¶अरत्नि-मात्र[b]- -त्रम् मै ३, २, ४; काठ २०,३; क ३१,५.

¶अरत्नि-मात्री[c]- -त्री मै ३, १, २; ७; काठ १९, १; क ३, १२; -त्रीम् काठ १९, १; ६; क २९,८;३०,४.

?२अरत्नि[d]- त्नयः ऋ ८, ८०,८.

¶अ-रत्निन्[e,f]- -त्निनः मै ४, ३,८.

अ-रथ[g]- -†थाः ऋ ५, ३१, ५; ९, ९७, २०; १०, ९९, ४[h]; तै १, ६,१२,६; मै ४, १२, २; काठ ८, १६; शौ ११, १२, २४$; -थेभ्यः[i] मा १६, २६; का १७, ३,५; तै ४,५,४,१.

अ-रथी[e]- -थीः ऋ ६, ६६,७.

अरदु[j]- -दुः खि ५ १५,१४.

?अरदु-परम[k] शौ २०,१३१,१५.

अ-रध्र[e]- -ध्रम् ऋ ६,६१,३; -ध्रस्य ऋ ६,१८,४.

---

[a]) नाप. (⌊आ कूर्परात् प्रसृतकनिष्ठिकाङ्गुलिपर्यन्त-प्रमाण-विशेष-⌋ कूर्पर-)। व्यु.? १अर-+ (√तन्>) *त्नि- इति तस. उस. वा (=प्राप्त्यर्थं तनने तात्पर्यम्) इति कृत्वा सास्व. वा उप. प्रकृतिस्वरम् वा द्र. तेन नैप्र. *अर्त्नि- इत्यत्र पूप. अन्तेऽकारोपजन इत्यभिसंधिः (तु. कुर्मन्-> कुर्म>पंजा. करम- प्रभृ.); वैतु. पाउ. (४ २) √*अर्(प्राप्तौ)+ अत्निच् प्र. इति कृत्वा चिदन्तोदात्त इति, WW १, १५७ < √*अर्(वलने) इति।

[b]) उस. उप. √मा (बधा) + कर्मणि त्रः प्र. (तु. पाउ ४, १६७) कृत्-स्वरः प्रकृत्या च। पाप्र. उप. तद्धितस्य मात्रचः प्र. सतः मौस्थि. स्वरूपमिति द्र.।

[c]) उप. मात्र-> मात्री- इति परिणामस्य तिस्रो विधाः संभवेयुः। यनि. उप. अनाम्नि सति मात्रच् इति प्र. चित्स्वरकरस्तदन्तात् स्त्री. ङीप् (पा ४, १, १५) इति प्रथमा विधा परिचितचरी। √मा (बधा.) + त्रिः प्र. इति कृत्वा *मात्रि- इत्यस्य भिन्नस्य प्राति. सतः स्त्री. ङीषन्तत्वं स्यात् (पावा ४, १, ४५) इति द्वितीया विधा स्यात्। -मात्र-> *-मात्रक-> *-मात्रिका->-मात्रि आ->-मात्री- इति चरमा विधा नैप्र. द्र. (तु. [illegible]-)। तद् एस्थि. एतासामुपादेयत्वतारतम्ये विमृशा धीः प्रमाणम्।

[d]) यनि. सतातः संदेहो भवति। अपेक्षाया अदर्शनात्। ननु अपा√वृज् इत्यनेन निवारणार्थेन सता कर्मसंबन्धेन युक्ततया श्राव्यमाणं किञ्चिदशुभमेव स्यादिति कृत्वा यनि. १संख्याकात् सरूपाद् भिन्नार्थं सद् भिन्ननिष्पत्तिकतयाऽभ्युपेयमिति (तु. सा. BW. च अ + ⌊√रम् >⌋ *रत्नि- इति कृत्वा तस. इति। तथा सति स्वरतश्चोद्यस्याऽपरिहार्यत्वं तु द्र.। अतोऽस्मिन् पक्षेऽपि उप. भावे इति कृत्वा बस. एव सुवचः स्यात् ⌊तु. वें.⌋)। मा त्वेवं मानि। अपा√वृज् इत्यस्य परतः पृथक्कृतिपूर्वकम् आभरणे वृत्त्युपगमाद् अपाऽऽङोरर्थयोर्विषयविभागेन कस्यचिद् वस्तुनः कुतश्चिदपकरणे कस्मैचिदपरस्मै चाऽऽवर्जन इत्यभिसंधेः (तु. अप √मे>मि, अपा √मे>मि इत्येतयोः शौ ६, ११७,१ इत्यत्र मै १, १०, २ इत्यत्र च समानप्रकारको विवेक इहोक्तो दिशं परिपुष्णन्निवाऽऽकूयोगवनि मै. स्थ संभर इति क्रिप. निदर्श्यमानः)।

[e]) तस. नञ्-स्वरः।

[f]) उप. रत्निन्- (सेनानी- प्रभृ ⌊तु. वैप४⌋)।

[g]) विप.। बस. अन्तोदात्तः (पा ६, २,१७२)।

[h]) वा. सस्थ. टि ?द्रोण्यश्व- द्र.।

[i]) सपा. मै ४, ९, ४ काठ १७, १२ क २७, २ वरूथिभ्यः इति पाभे.।

[j]) व्यु.? प्रकरणतो वृक्षविशेषस्य नामेति सुलभम् (तु. नाउ. टि. ⌊पाग ४, २, ८०⌋)। यत अश्वत्थाद्यन्तर्गते अरडु (डु)- इत्यत्रेह तात्पर्यमिति संकेतलाभः स्यात्)।

[k]) तु. खि ५, १५, १४ अरदुः परमः यत इहाऽपि पदद्वयाऽऽत्मक एव पाठः मौलिकतया व्यवसीयेत (वैतु.

अ-रपुस्[a]- -†पः[b] ऋ ⌊१०, १५, ४; ३७, ११⌋; मा ८, ५$; १९, ५५; का ८, २,१$; २१, ४.५; तै २, ६,१२,३; मै ४, १०, ६; काठ २१,१४; शौ १८, १,५१; पै १९, ३०, ३; २०, ६, २†; -पाः ऋ २, ३३, ६; ८, १८, ९; १०, १३७, ५; तै ३, २, ८, ४; शौ १, २२,२; ४, १३, ४†; पै १,२८,२.

अरु-मणस्- २अर- द्र.

†अरुमति[c]- -तिः ऋ ⌊(१, ३५, ८) २,३८,४⌋; ७,१, ६; ३४, २१; ८, ३१, १२; १०, ६४, १५; ९२, ४; तै ४, ३, १३, ६; -तिम् ऋ ५, ४३, ६; ५४, ६; ७, ३६, ८; ४२, ३; १०, ९२,५.

अ-रममाण[d]- -णः ऋ ९, ७२,३.

अररिन्द[e]- -न्दानि ऋ १, १३९, १०.

†अ-ररिवस्[f]- -वान् ऋ १, १४७, ४; -रुषः ऋ ⌊१, १८,३[1]; ७ ९४, ८⌋; १५०, २; ३, १८, २; ५, ७७,१; ⌊(१, ३६, १५) ७,१,१३⌋; ९४, ८; ९, २९,५; मा ३, ३०; का ३, ३, २२; मै ४,१२,६; काठ ७,२; ३५, १४; क ५,२; ४८,१३; -रुषे ऋ ७, ५६,१९; मै ४,१४,१८.

अुररुषी- -षीः शौ १९, १५, २; पै ३,३५,२; २०,२४,६.

अरुरु[g]- -रुः तै १, १, ९, १[1]; २;

RW. अुरदुपर्णः इत्येकं पदमिति । परमुः इत्यस्य च स्थाने पर्णः इति सुपठः शोधः द्र.) ।

[a]) विप. (गृह-, वात- प्रभृ.) । बस. अन्तोदात्तः (पा ६,२, १७२) ।

[b]) अदन्तं प्राति. इति परमतमनभिमतमिव भवति (तु. भा. K. च; वैतु. सा. उ. म. PW. MW. NW. च) । कथमिति चेत् । उच्यते । उ. म. च स्वपक्षपुष्ट्या उदाहृतस्य यास्कीयवचनस्य तन्मतविनाशकत्वाद् अरुपः इत्यस्य न. द्वि१ सतः क्रिवि. इति कृत्वा वा. सुवचतरत्वाच्च । यच्च सा. (तै ३, २,८,४) विश्वे इत्यनेन सामानाधिकरण्यमिच्छन् अरपुाः इति प्र३ आह, तदप्यसत् । एधते इत्यैकवचनिक्या क्रियया अरपुाः इत्यस्य संबन्धस्य निगदस्पष्टत्वादिति (तु. जायते विन्दुते इति सांनिध्येन श्रूयमाणे ऐकवचनिके क्रिप.) ।

[c]) अुरम् > अरुम् > अरु-मति- इत्याकारिका मतिरर्वाचामभियुक्तानामत्र यद् भवति (तु. W. प्रभृ.), तद् असद् इवाऽऽभाति । पपा. अवग्रहाऽऽभावात् कामं नञ्-समास इह भवतु, न तु पराभिमतः बस. । रमति- इत्येतत् प्राति. हि निद्-अनिद्-अन्यतर- अति- प्रत्ययान्ततया (तु. पाउ ४, ६५) मनोबन्ध-तद्वद्-अन्यतर-वाचकतया च श्रुत्यन्तरप्रसिद्धम् (तु. शौ ६, ७३,२; ३; ७, ७९, २) । अत्र चैतत् प्राति. उप. भवति नञ् च पूप. भवतीत्यत्र बाह्वृचश्रुत्यन्तरसाधारण्येन विशेषणमात्रतया अनर्वुन्- इत्येतेन अनेहु- इत्येतेन च साहचर्येण च श्रूयमाणं ज्ञापकं भवेत् (तु. ऋ८,३१,१२) । उत्तरपदाद्युदात्तस्तावत् बसं. (पा ६,२,११६) ।

[d]) तस. नञ्-स्वरः । उप. यद्र. ।

[e]) नाप. (उदक- इति वें. सा. ⌊तु. निघ १, १२⌋, सोमाभिषवणीयपात्र- इति PW. GW. प्रभृ.) । व्यु. ? *१अररि- [=अु + (√रा ⌊दाने⌋ > कर्तरि वा भावे वा) ररि- इति बस. वा (=अदातृक-) तस. वा (=अदत्त- यस्मिन् कल्पेऽन्तोदात्तस्तु दुरुपपदः द्र.)] इति कृत्वा तत्पूर्वः (√दा ⌊दाने⌋> कर्तरि) द- इति उस. इति दे. (१,१२) यस्थ. सा. च ; पूर्वस्मिन्नेव कल्पे पूप. <√*अर् (गतौ) वेति सा. ; *२अररि- (=कपाट-पर्यायः ⌊व्यु.?⌋) + (दा ⌊अवखण्डने⌋ > कर्तरि) द- इति कृत्वा उस. इति PW. अनु GW. L ४४१ । सर्वथापि °त्वेव पूप. प्रकृतिस्वरोऽनुपपन्न इति कृत्वा कोऽपि भूयो विमृश्यस्वरूपः बस. एव शरणीयः ।

[f]) अुररिवस्- (√*अर् ⌊हिंसायाम्⌋ + क्वसुः प्र. इति मतं द्र.) ।

[g]) विप., नाप. (रक्षस्-, भ्रातृव्य- ⌊काठ २५,४⌋ प्रभृ.) । व्यु. ? (√*अर् ⌊संसर्गप्रतिबन्धे⌋ + भावे विच् प्र.) *अुर् + *१अुरु- (√*अर् ⌊संसर्गप्रतिबन्धे⌋ + कर्तरि उन् प्र. उसं. ⌊पाउ १,९⌋) इत्येवम् उस. उप. प्रकृतिस्वरं स्यात् (=बाधया बाधमान-) इति प्रथमः कल्पः । यद्वा २अुर्- (√*अर् ⌊संसर्गप्रतिबन्धे⌋ + कर्तरि विच् प्र.) + अु + रु- (< √रा ⌊दाने⌋) इत्येवं कस. =अः (बाधमानः) चासाव् अरः (अदाता) च इति कृत्वा निन्दाऽर्थे उल् प्र. तद्धितः उसं. (पा ५, ३, ७४) लित्त्वाच्च स्वरस्तदवस्थ इति द्वितीयः कल्पः । अथाऽपि वा *२अुर्- इत्यस्यैवाऽतिशयितेऽर्थेऽभ्यासः स्यात्, नापू. दिशा प्र. स्वरश्चेति तृतीयः

३[a]; मै ४, १, १०[१]; काठ १,९; २५,४[१]¶; ३१,८[५];¶[१]; क १,९; ३९, १[१]¶; ४७, ८[५]; ¶[१]; शौ ६, ४६,१[b]; -रुम् ऋ १,१२९, ३; १०,९९, १०; मा १, २६; का १, ९, ४; मै १, १, १०; ४, १, १०; काठ १, ९; २५, ४; ३१, ८; क १,९; ३९, १; ४७,८; -०रो मा १, १६; का १,९,४; पै २,३७,४.

¶अ-रशन्°- -नम् काठ २६, ६; क ४१,४; -नान् मै ३,९,४.

अ-रश्मन्°- -श्मानः ऋ ९,९७,२०.

अ-रस,सा°- -०स शौ ६, १३८,३; -०स शौ ४, ६,६; पै १, ६८, ४; ४,१७, ४; ५, ८, ५; -सः शौ ४, ६, ६; ५, १६, १-१०; १२,२; पै १, ६८, ४; ३, १६, ५; ५, ८, ५; ८, २, ६; ४, १-११; १९, १२, १२; -सम् ऋ १, १९१, १६[१]; शौ ४, ६, १; ६[१]; ७, २[१]; ५, ४, ९; ८, ६; १३,८; १०; ११; ६, २९, ३?[d]; १००, ३; १३८, ३; ७, ५८, ३; ७; १०, ४, ३; ४; ११, १२, १७; १९, ३४, ३; पै १, ४४, ४; ४८, ४; ६८, ४; ९३, ४; १११, ३; २, १, १[१]; २, १; ५; ३, ९, १[१]-६[१]; ७; ४,१७,३[१e]; ४;७; १९, ४; ५; ७; ५, ८, ५[१]; ८; ७, १८, ७; ८, २, ९-११; ७, १-४; ११; ९, १०, ५-८; १२[१]; ११, १२; ११, ३, ३; १०; १६, १५, २-४; १९, १३, ६; ५४, ९; १०; २०, १३, ९; २७, ८; ४२, ८; ९; ४७, ६; ५५, १; -सस्य शौ ४, ६, ६; ७, ५८, ५; पै १, ४८, १; ५, ८, ५; -सा शौ १०, ४, ८; पै १६, १५, ८; -साः शौ २, ३१, ३; ४, १८, १; ९, २, १०; १९, ३४, ३; पै २, १५, ३; ५,२४, १; ७, ८,५; ११, ३, ३; १५, १९, ३; १६, ७६, ९; -०साः शौ ५, १३,७; -सान् शौ २, २७, १-६; १९, ३४, २; १०; ३५,५; पै २, १६, १; ८,२,७; ७, ७; ११, ३,२; ४,५; ७, ३; -सासः शौ १०, ४,९; पै १६, १५,९; -०से पै १९, ४२,३.

अरस-तम- -मम् शौ ५, १३, ९; पै ७,३,५; ८,२,८.

अरस-त(र>)रा- -राः शौ ७, ८०,१; पै १,२१,१.

?अरसावधी[f] पै ३,१६,४.

अ-राजन्- -जानः पै १,९२,२.

¶अ-राजन्य[g]- -न्यः मै १, ५,८.

अराज्ञिन्[h]- -जिनः ऋ ८,७,२३.

---

कल्पः। वाऽऽद्युदात्तः क्वाचित्कः पाभे. (तु. शंपा. शौ. यस्थ.) ज्ञापकः स्याद् यथा पुराकाले प्रवृत्तिमान् सन्नपि सामासिकः स्वरः कालेनेहाऽऽख्यातऽभ्यस्त-विधया (पा ६, १, १८९) आद्युदात्ततया पर्यणंसीदिति। स्याद्वा द्वितीये कल्प एव पक्षे अन् प्र. तद्धितः उसं. (पा ५,३,७४)। एस्थि. √*अर्(प्राप्तौ) इत्येतदर्थ-प्राधान्येन व्यु. द्र. इत्यभिसंधिः (तु. GW. शत्रुपर्या-वाचिना अरि- इत्येतेन पक्षे संजिगमयिषुः; वैतु. पाउ. [४,८४] √*अर्[प्राप्तौ] + असः प्र. इति, PW. प्रमृ. अ+[√रा 'दाने'>]रस-[स्वरः?] इति तस. इति। तथा सत्युत्तरादि-स्वर उपपत्तिसाकाङ्क्षः द्र.)।

[a]) पाभे. द्रप्सः मा १,२६ द्र.।

[b]) आद्युदात्तोऽपि पाभे. (तु. शंपा. मुपा. च टि. च)। सपा. पै १९, ४६, १२ ?हुडुत् इति पाभे.।

[c]) बस. अन्तोदात्तः (पा ६, २, १७२)।

[d]) आ√रध् 'हिंसायाम्' > (भावे कृत्) *आ-रध- > नैप्र. यनि. विपरिणतमिति कृत्वा =हिंसा-भर- इति मतम् (तु. सस्थ. टि. आभूक- [यत्र 'यमकर्तृका हिंसा मा भूत्' इति तात्पर्यं द्र.])।

[e]) त्ववारसम् (मूको.) > त्व् अवारसम् (मुपा. !)। अत्र तव। अरसम् इति द्विपदः शोधः द्र.।

[f]) अरसः। अवधीत् इति शोधः द्र.।

[g]) तस. नञ्-स्वरः।

[h]) व्यु.? (√*अर् [संसर्गप्रतिबन्धे] >) २अर्-+ आजिन्- (=आ√अज् + ताच्छीलिकः इनिः प्र. [तु. पा ३,२, १५६] इति उस. उप. प्रकृतिस्वरम् (प्रति-बन्धकान् विद्रावयितृ-); वैतु. वें. W. MW. GW. च पर्वतविषयतया अ + (√राज् >) *१राज्ञिन्- इति तस. इति। तथा सत्यन्तोदात्त उप-पत्तिसाकाङ्क्षः सन् कथमपि पा ६, २,१५५ उउ. उसं. स्यात्; वें. मेघविषयतया सा. मरुद्विषयतया च अ + *२राज्ञिन् (राजन्- + मत्वर्थे तद्धितः इनिः प्र.) इति तस. इति वा, ? *अराज- (अ + राजन्- इति बस) + तद्धितः इनिः प्र. इति बस. इति वेति; पपा. अप्यवग्रहाऽभावो नञ्-पूर्वत्वस्य संकेतः स्यात्।

**अराटकी**[a]- -की शौ ४, ३७, ६; पै १३,४,१०;११.

¶**अराड**[b]- -ढः मै २,५,९.

**अराड्य**[c]- -ड्यौ तै ५,६,२१,१[d].

**अराण**- √ऋ द्र.

**अ-राति,*ती**[e]- -तयः ऋ १,२९, ४; ४३,८; २, २३, ५; ९; ३५,६; ३८, ९; ५, २, ६; [६, ४८, १६; ५९, ८]; ७, ८३, ३; ५; ८, ९, १; ७१, ४; ९, ७९, १; १०, ५७, १; ८५, ३२; १३३, ३; १७४, २; मा १,७[१]; १४; १६, १९; २९[४]; का १,३, ३[१]; ५, १; ६; ७, १; ८, ३; १०, १[४]; तै १, १, २, १; ४,१; ५, १; २; ६, १; ७, १; ८, १; १०, १; २, ५, १; ३, १, १; ६,१, ८, ३; २, १०, १; †कौ १, ५५५; २, ११५३; †जै १, ५७, २; ४,१, ६; शौ १, २९, २†; ५, २३, २; ६, १२९, १-३; ११, १०, २१; १३, १, ५९†; १४, २, ११†; १९, ५०, ३; †२०, ७४, ४; ९५, ४; १३९, १; पै १, ११, २; ७, २, २; ९; ७, ८; १४, ४, १३; १६,८७,१; १७, २५, २; १८, ८, २; १९, ३२, १; २; ३; -तये मा १, ११; का १, ३, ७; मै १, १, ५; ४, १, ५[२]; शौ ५, ७, १; ३; पै ७, ९, ४; १९, ३; ४; -तिः ऋ २, ७, २; ८, ४८, ३; १०, ३४, १४; खि ४,५,१४; तै ३, २, ५, ४†; मै १,१, २; ४; ६; ७[१]; ८; ११; २, १६; ३, १०, १; ४, १, ७; काठ १, २; ४; ५[१]; ६; ७; ८; १०; ३, ६; ३१, ४[१]; ५; ६; क १, ५[१]; ६; ४७, ४[१]; ५; शौ २, ७, ४‡[f]; ६,१२४, ३; १२, ३, १७; पै १, ४६, ६?[g]; ८, ३, ४; १३, ३, १४; १७, ३७, ७; -तिम् ऋ ४, ४. ४; १०, ६३, १२; मा १३, १२† ; २७,६[h]; का १४, १, १२†; २९,१,६[h]; तै १, २, १४, २†; ८, १०, २[i]; ४, १, ७, ३[h]; मै १, १, ११; २, ११; १४; ४, ३[१]; ५, १; २, ७, १५†; १६; काठ १,१०; २, १२; ३, ३; ५, ४; १६,१५†; १६†; ३१, १४; क १, १०; २, ६; १०; २५, ६†; ‡[j]कौ १,५४०; २, ३६९; [j]जै १, ५५, ७; ३, ३०, १२; शौ १, १८, १[२]; २, १०, ७[k]; ३, १,१; २, १; १५, १; ५, ७, ३; ६; ८, २, १२; १२, २, ३; ४५; १९, ३१,११; पै १, ६९, २; ८६,२; ३, ५, १; ६, १; ४ ८,१-१३; १८, ५; ५, २६, ३-६; ९; ७, ९, ४; ८; १०, ५, ११; १६, ४, २;

a) मूको. दीर्घाऽऽदिरपि पाठः द्र. । व्यु. ? √*अर् 'हिंसायाम्' [मौस्थि. < √*२ हर् (=√२हृ) < √*शर् (=√*शॄ) <> √ *कर् (=√*कॄ)] > *५अर्- (=शृङ्ग- [तु. ३हरिण-] WW १, ४०३ उ) + १अर्ध- (=प्रकर्ष- < √ऋध् इति षस. सास्व. इति कृत्वा १ *अरार्ध- इत्यस्मिन् प्राति. उपपदे सति (√कृ + डिः प्र. उसं. [पाउ ४, १३९]=) *कि- इति उप. योगे *अरार्धकि-> (स्त्री. ङीष् [पावा ४, १, ४५]) -की- इति त्रिप्रस्थानस्य प्राति. मौस्थि. अभ्युपेयमानस्य सतः नैप्र. *अरार्धकी->*अराढ (>ड> *ट)की- इति परिणामः अनुसंधेयः (तु. सह श्रूयमाणं शृङ्गपदप्रधानं विप. ; नाउ. ?सनि. प्राति. च, वर्धकि- प्राति. च लोके) ।

b) व्यु. ? (√*अर् [हिंसायाम्] >) *५अर्- + १अर्ध- (तु. नापू. टि.) इति कृत्वा बस. पूप. प्रकृतिस्वरम् द्र. (=शृङ्गप्रकर्षवत्-) । स्वरूपतस्तु नैप्र. *१अरार्ध->*अराढ-> यनि. इति सुलभः क्रमः ।

c) व्यु. ? नापू. स्वार्थे यत् प्र. (पा ५, ३,१०३) यद्वा *३अर्-+१अर्ध- इति षस. सतस्तत्रसाधवीयः यत् प्र (पा ४,४,९८) । उभयथाऽपि तित्-स्वरः (पा ६,१, १८५) । दीर्घादि प्राति. अपि यद्र. ।

d) सपा. काठ ५०,१ आराड्यौ इति पाभे. ।

e) भाप. (अ-प्रदान-, लोभ-बुद्धि- प्रभृ. [तु. या ११,२] PW. GW. प्रभृ. च), नाप. (अ-दातृ- [तु. या ३,११], शत्रु-)। तस. नञ्-स्वरः। उप. राति- टि. यद्र. ।

f) सपा. ऋ ९,११४,४ अरातीवा इति पाभे. ।

g) अरातीः इति शोधः (तु सपा. पै ७, १५, ४) । एतदनु सस्थ. ?आदद्रुः टि. द्र. ।

h) सपा. शौ २,६,५ द्विषः इति, काठ१८,१६ निर्ऋतिम् इति च पाभे. ।

i) पाभे. १अरातीन् द्र. ।

j) सपा. ऋ ९,९७,१० °तीः इति पाभे. ।

k) सपा. तैब्रा २,५,६,३ आपमं २, १२,९ अवर्तिम् इति पाभे. ।

१५, ७; १९, २९, १; ३९, ६; ४६, २; ४९, १; २०, १८, २; –*तियम्[a] पै ५, २६, ४; ६; ८; -तीः ऋ १, ११६, २१; ३. १८, १; २४, १; ४. [२६, ७; २७, २]; [५०, ११ (७, ६४, ५; ६५, ५; ९७, ७)]; ५, ५३, १४; ६, ४, ५[b]; १६, २७[a]; ४४, ९; ७, १, ७; ९७, ९; ८, ११, ३; ३९, २[a]; ९, ९६, १५; ९७, १०[c]; खि ३, १६, ३[d]; ४, ५, ५; १३[e]; मा ५, २६; ६, १; ९, ३७; १०, १; १२, ९९[f]; १३, २६; का ५, ७, १; ६, १, १; ११, १, ३; २, १; १४, २, १२; तै १, ३, १, २; २, २; ६, १; ६, १, १; ८, ११, १; ४, १, ४, ४[g]; २, ८, १; ९, २; ५, १, ५, ९[g]; मै १, २, १; ५, ३; ६, २; २, ६, ८; ३, ६, ३[a]¶; ४, १४, ६‡[h]; १७; काठ २, १; १५, ६; ३९, १; क १, १३; जै ४, २५, १†; शौ १, २, २; १०, ५, ३६; १३, १, २०; १६, ९, १; पै ३, ३३, ६; ५, ६, ८?[i]; ७, १५, ४; १२, ६, ८; १४, १, ९; १६, १३२, १; १७, ३४, ६; १८, १६, १०; २९, १; –तीनाम् खि १, ५, ५; –*तीम्[c] पै ५ २६, ७; ९; –०ते शौ ५, ७, ८; –०ते शौ ५, ७, १; २; ७; १४, २, १९; पै ७, ९, १–३; ५; १८, ८, १०; –तेः ऋ ८, ७१, १; कौ १, ६; जै १, १, ६; –त्या शौ ३, ३१, १; –त्याः ऋ ९, ७९, ३[a]; शौ १०, ३, ७; १३, ८, २; –त्याः पै ५, २६, १; २; १६, ६३, ७; –त्यै तै १, १, ४, २; काठ १, ४; ३१, ३; क १, ४; ४७, ३; शौ ५, ७, १०. [°ति- अन्°].

अराति-दुम्भि[j]- -म्भिम् खि १, ५, ११.

अराति-दूषण[k]- -णः[l] शौ १९, ३४, ४; पै ११, ३, ४.

अराति-दूषि[m]- -षिः[l] शौ २, ४, ६.

अराति-भय[n]- -ये खिसा २६, १८.

अराति-हृ[o]- -हम् शौ १९, ३५, २; पै ११, ४, २.

अराति-हन्- -हनम् काठ ३९, ५.

अरातिघ्नी- -घ्नीः काठ ३९, १.

√अरातिय[p], अरातियात् शौ ४, ३६, १.

√अरातीय[p], अरातीयति तै १, ३, २, १; ६, ३, १[q]; ३, ५, ८,

---

[a]) प्रकृते सूक्ते प्रथमे मन्त्रे पूर्वोत्तरविरहितस्य रा? इत्यस्य च २ये च मन्त्रे रात्यात्? इत्यस्य च पूर्तिकरं अरात्याः इति; ४थे, ६ठे, ८मे च मन्त्रेषु मूको. रातीयम् (=*अरातियम्) इति, ९मे च मन्त्रे मूको. रात्रीम् (=अरातीम्) इति च *अराती- (>तु. खि १, ५, ५ –तीनाम्) इत्यस्य ङीषन्तस्य (पावा ४, १, ४५) सद्भावप्रामाण्ये संकेतः द्र. । एस्थि. १मे मन्त्रे रा (=*अरात्याः), २ये मन्त्रे रात्यात् (=*अरात्याः), ४थे, ६ठे च मन्त्रयोः अरातिम् (=*अरातियम्), ७मे मन्त्रे अरातीन् (=*अरातीम्), ८मे मन्त्रे अरातीन् (=*अरातियम्), ९मे च मन्त्रे अरातिम् (=*अरातीम्) इत्येवं शोध-परम्परा द्र. । अनयैव दिशाऽन्येष्वपि बहुषु स्थ. मूको. अनुसंधानतो दीर्घान्तस्य प्राति. सद्भावोऽङ्गीकार्येतेति संभाव्येत ।

[b]) प्र१ छन्दोऽनुरुद्धं दीर्घत्वम् (तु. सा. =अरातिरिति, L ३७६; वैतु. सा. द्वि३ इत्येवमपि मृषा विकल्पुकः) । यद्वा *अरातिर्-[=अ+*रा-तिर्-(=√रा [दाने] + भावे वा कर्तरि वा+तिर्-[<√तॄ]) इति तस. । इत्यस्य प्र१ द्र. (तु. *अमतिर्-)] । [c]) पाभे. –तिम् कौ १, ५४० प्रमृ. द्र. ।

[d]) अरा° मुपा. स्वरभ्रेषः द्र. ।

[e]) सपा. खिसा २९, १५ राऽयाः इति पाभे. ।

[f]) पाभे. अभिमातिम् शौ १९, ३२, ६ द्र. ।

[g]) पाभे. २अनिराः द्र. ।

[h]) सपा. ऋ ७, ८२, १ विशिष्टः पाभे. ।

[i]) नकारान्तः मुपा. सु-शोधः द्र. । अन्त्यनकारहीनः मुपा. पाठो विसर्जनीयेन पूर्येत, न तु नकारेण । पुंसि प्रयोगस्य श्रुत्यप्रसिद्धत्वात् ।

[j]) षस. सास्व. । मुपा. आद्यन्तोभयस्वरः सु-शोधः द्र. ।

[k]) उस. उप. √दुष् >दूषि + कर्तरि ल्युः प्र. । कृत्-स्वरः प्रकृत्या ।

[l]) सपा. °षणः <> °षिः इति पाभे. ।

[m]) उस. इन्नन्ते कृत्-स्वरः प्रकृत्या (पा ६, १, १९७; २, १३९) ।

[n]) पंस. अन्तोदात्तः । भ° इति स्वरः? यनि. शोधः ।

[o]) उस. उप. √हन् + डः प्र. (पा ३, २, ४९) ।

[p]) क्यजन्तः नाधा. । दीर्घत्वभावाऽभावौ यस्था. द्र. ।

[q]) आत्मन इच्छायां क्यचं ब्रुवाणः भा. चिन्त्यः । अरातेरात्मन इच्छाया विषयत्वाऽयोग्यत्वात् ।

१; मै १, २, १०; ३, ८, ८¶; काठ २, ५; ९; ११; १२; ३,३; ७.६; २५,९; क २, ५; ५,५¶; ४०, २; अरातीयुन्ति खि २, ८, ३; मै ४, ३, १[1]; ८, २¶; काठ २८, ४¶; क ४४, ४¶; अरातीयात् मा ११, ८०; का १२,७,१५; तै ४, १, १०, ३; मै २, ७,७; ३,१,९; काठ १६, ७; १९,१०; क ३०,८; पै १, ४२,४.

अरातीयत्- -यतः ऋ १, ९९, १; खि ४, २, ६; खिसा २६, १८; मा १२,५; का १३, १,६; तै १, ६, १, १; ५, २; ४, २, १,१; ९,२; मै १, २, १०[a]; २, ७, ८; काठ १६, ८; क २, ५[a]; -यन् काठ ३१, १४; -¶यन्तम् तै ३, १, ४,४; मै ३,१,३[b].

अरातीयु[c]- -योः शौ १०, ६, १; पै १६,४२,१.

†अराती-वन्[d]- -वा ऋ १, १४७, ४; २. २३, ७; ८, ६२, ११; ९,११४,४[e]; तै ७, ४, १५, १; काठ ४४,४.

?अरादविदुरश्चसहनुः पै ५,२,५.

अ-राद्धि- -द्ध्यै मा ३०, ९; का ३४, २,१.

†अ-राधस्[f]- -धसः ऋ ५, ६१, ६; ८, ६४, २; १०, ३२, २; ६०, ६; कौ २.७०५; जै ४,७, १०; शौ $१२, १०, १४; ११, ४; २०, ९३, २; -धसम् ऋ १, ८४, ८; ९, १०१, १३; कौ १, ५५३; २, ६९३; ७३६; जै १, ५६, ९; ३, १२, ८; ५६, २०; ४,२६,१; शौ $५, ११, ७; ८; २०, ६३, ५; $पै ८, १, ७; ८; १६,१४६,१०.

?अरामाज्याः पै १९,४१,१०.

१अ-राय[g]- -यासः ऋ ८,६१,११.

२अराय[h]- -०य पै २, ६७, २; -यः पै २, ६७, १; ६, १४, ७; ८; १९, २५, १२‡[i]; १३‡[i]; -यम् शौ २, २५, ३; पै ४, १३, ४; ६; ७, ११, ६; १७, १३, ४[j]; -याः शौ १२, १, ५०; पै १७, ५, ८; १३, ८; १९, २५, १४; -यान् शौ ८, ६, ४-६; १२; ११,

---

[a]) पाभे. नाष्ट्राणाम् तै १,३,२,१ द्र.।

[b]) सपा. तै ५,१,२,३ काठ १९, २ भ्रातृव्यम् इति पाभे.।

[c]) ताच्छीलिकः उः प्र. (पा ३,२,१७०)। तत्-स्वरः।

[d]) व्यु. ? *अराती- इति उपपदे √वन् + कर्तरि क्विप् प्र. (पा ३, २, ७६) इति कृत्वा उस. उप. प्रकृतिस्वरम् (पा ६, २, १३९) इति प्रथमः कल्पः। √अरातीय् > *अरातीया- (पा ३, ३, १०२) इत्युपपदे पूर्ववत् उस. कृते सति नैप्र. *अरातीया-वन्-> यनि. इत्यन्तोदात्तप्रयोजिततत्पूर्वलोपात्मकः परिणाम इति द्वितीयः कल्पः। अथ पाप्र. √अरातीय् + वनिः प्र. उसं. (पा ३, २, ७५)। ततोऽकारयकारयोर्लोपः (यक्र. पा ६, ४, १४८; १, ६६) इति वा। *अरातीया- + वन् प्र. तद्धितः उसं. (पावा ५, २, १०९) इति कृत्वा भत्वे उसं. (पा १, ४, २०) पूर्वपदू अवर्णलोपे यलोप इति वा। *अरातिर्- + वन् (गपू. दिशा) प्र. इति वेत्येवं कल्पपञ्चतयं समूढं द्र.। तत्राऽपि द्वितीये कल्प आस्थाविशेषश्चेति दिक् (तु. अमती-वन्-; वैतु. पपा. PW. प्रभृ. च अराति-वन्- इत्यत्रप्रहमुखा भवन्तो मध्ये दीर्घं नोपपादुकाः; भा. ⌊तै ७, ४, १५, १⌋ सा. ⌊ऋ १, १४७, ४⌋ चोत्तरांऽशं वनिप् प्र. इति वचनतः पित्-स्वरतः प्रसज्यमानलक्ष्यविघातं प्रति पर्यनुयोज्यावित्यपरो विशेषः)।

[e]) पाभे. अरातिः शौ २,७,४ द्र.।

[f]) बस. अन्तोदात्तः (पा ६,२,१७२)।

[g]) तस. नञ्-स्वरः। उप. *राय- ( √रा ⌊दाने⌋ + कर्तरि णः प्र. युक् च); वैतु या. (६, २५) प्रभृ. सर्वे बस. इति कृत्वा रै-पर्यायीकुर्वाणा घञन्तमिव प्रतिपादुकाः सन्तः प्रसज्यमानाऽन्तोदात्ताः (पा ६, २, १७२) चिन्त्याः।

[h]) नाप. ( रक्षस्- प्रभृ. )। व्यु. ? रक्षोऽसृक्पावगर्भाद-जिघत्सुत्वादिर्हिंसा-प्रधानविशेषणसहश्रुतिभिः (तु. यनि. स्थ.) लिङ्गितं भवति, यथेह √ *अर्(हिंसायाम्) > ५*अर्-+(√इ + भावे घञ् प्र.) *आय- इति कृत्वा बस. पूप. प्रकृतिस्वरम् (पा ६,२,१ ⌊=अराऽऽय-⌋) इति; वैतु. या. ⌊६, ३०⌋ प्रभृ. तस. इति कृत्वा नञ्-पूर्वत्वे सति √रा ⌊दाने⌋ इत्यत एव निष्पादुकाः सन्तः स्वरतश्चिन्त्याः।

[i]) पाभे. अमीवा ऋ १०,१६२,१ द्र.।

[j]) रायम् इति पाठः ? यनि. शोधः (तु. BKA.)।

६, १६; १६, ६, ७; पै १५, १४, ९; १६, ७९, ४-६;८०, ३; ८१, २;५; -येभ्यः शौ ८, २, २०; पै ५, ३४, ५[a]; १६, ४,१०.

अरायी[b]- -०यि ऋ १०, १५५, १; २; -०यि पै १७, १४, १; -यीः पै १७, १४, २[c]; -र्य्यः शौ १, २८, ४; २, १४, ३; ४, १७, ५; १८, ७; ८; ७, २३, १; पै २, ४, ५; ५, २३, ७; २४, ७; ८; २०, १५,५; ६०, ११; -य्यम् ऋ १०, १५५,२[d].

अराय-क्षयण[e]- -णम् शौ २,१८,३.

अराय-चातन[e]- -नम् शौ २,१८,३.

? ✓*अराय[f] >अराय्य[g]- -य्यम् खि ५, १०,२.

?अरायभ्य.[h] पै ५,३४,५.

अराल[i]- -लाः[j] खि ५,१७,१.

†अरावन्[k]- -वा ऋ ७, ५६, १५.

[a]) –यभ्यः इति पाठः? यनि. शोधः ।

[b]) रक्षोजातिविशेषीयत्वाद् योपधत्वे सत्यपि ङीष् प्र. उसं. (पा ४,१,६३) । -०यि इत्यत्र आमन्त्रिताद्युदात्तः द्र. (वैतु. सा. [शौ १, २८, ४] स्त्री. पुंयोगीयम् [पा ४,१,४८] प्र. प्रस्तावुकः, Reuter (KZ ३२,२९७) च <अरि- [तु. जह्नावी- प्रमृ.]) ।

[c]) रायी इति पाठः? यनि. शोधः ।

[d]) सपा. पै ५,९,४ सदान्वाः इति पाभे. ।

[e]) विप. (अग्नि- प्रमृ.) उस. कर्तरि ल्युडन्ते कृत्-स्वरः प्रकृत्या (पा ६,१,१९३;२, १३९) । उप. यक. <✓क्षि (क्षये); <✓चन् > चाति (नाशने) ।

[f]) ✓*अर् 'रक्षणे' (मौस्थि. <✓*ह [घ, ग, ख, क, श, क्ष, स्क] र् <✓*अस्कृ 'खनने') >*अर्- (अस्य गृह-रक्षित्रोरर्थे शरण - इत्येतत्-सा जात्यमित्यभिसंधिः) >यनि. नाउ. व्यु. औपयिकः क्यङन्तः नाधा. रक्षितृभावे द्र. ।

[g]) भावे यः प्र. कृत्येषु उसं. (पा ३,१,९५ उउ.) । तत्-स्वरश्च (तु. मूको. च, ✓*मृ >मराय- इति शाश्रौ [१२, १७, २] कुलाय- [मौस्थि. साजात्यभाक् यद्र.] इति च पाभे) ।

[h]) ✓*अराय 'कुत्सितशब्दे' >*अरायत्- >अराय-द्भ्यः इति शोधः ।

[i]) व्यु. ? ✓*अर् 'वलने' (तु. WW १, १५७) । यद्वा ✓*अर् 'सामीप्ये' (तु. RW. [शौ २०, १३४, १] ?*आ-सन्नाः इति पठन्तौ) + आलः प्र. (वैतु. आलच् प्र. इति भो. पाउना. च । तथा सति स्वरस्तु नोपपद्येतेति दिक्) प्र. स्वरश्च । यत्तु *अरालाच्,अच्- > -लाक् इतीव गपू. शौ. (शंपा.) अश्रावि, तन्नेष्टम् । नाउउ. मन्त्रेषु प्रागादीनाम् अधरागन्तानां चतुर्णामेव क्रिवि. सतां पदानामावृत्तिदर्शनाद् न प्रकृतं पदं तत्सजातीयमित्यस्य विषयस्य सुवचत्वाच्च नाउउ. मन्त्राणां वा. दिशा एव च प्रपु३ सता क्रिप. कर्तृ-संबन्धेन युक्तस्य गतः प्र३ कस्यचिन्नाम्न एवाऽऽका-ङ्क्षितत्वाच्च ।

[j]) सपा. शाश्रौ १२,२३,१ (तु. शंपा. सात. [शौ२०, १३४,१] ?अरालाक् इति पाभे.) ।

[k]) व्यु.? (✓*अर् [संसंगप्रतिबन्धे] + भावे अप् प्र. *अर- > स्वार्थे *अरक- > नैप्र.) अरा- + *वन्- (✓वन् + भावे क्विप् प्र.) = 'अरे (प्रतिबन्धे वा हानौ वा) वन् (मनः) यस्य (पाप्र. वन् प्र. तद्धितः उसं. (पावा ५, २, १०९) इति बस. पूप. प्रकृतिस्वरम् (वैतु. पपा. अनवगृह्णन् नञ् पूप. इतीव विज्ञापुकाः) । PW. प्रमृ. तु अ + *रावन्- (<✓रा [दाने]) इति तस. इति संवादुकाः । यत्तु ऋ ७, ६८, ७ इत्यत्र यनि. भिन्नं सदपरं सरूपं प्राति. कृत्वा भिन्नायाः व्यु. विषयः [तु. सा. (<✓*अर् [इत्यभिसंधाय]) 'अरणत्वानभिगन्ता' इति; PW. =२अर्-वन्- (=रथ-) इति (तथा च सति स्वरस्तु दुरुपपादः द्र.)] इति पराऽभिप्रायो भवति, तदनिष्टम् । यनि. प्राति. प्राकरणिकऽर्थतः सुसंगत-त्वात् कल्पनान्तरस्याऽन्यथासिद्धेः । 'यदा भुज्युं तस्याऽऽत्मीयत्वेनाऽनुभूयमानाः सखायोऽपि पापवृत्तयो भूत्वा मध्ये समुद्रं जहुः, तदा किल कश्चिदपर एव नितान्तमसंबद्धः (=१ अरणः) शत्रुबुद्धिर्वाऽपि सन्नश्विनोः संभक्तत्वाऽभिसंबन्धेन मनोम्रदिम्ना नेदीय इव प्रेरितो भूत्वा तं निस्तारयामास' इति श्रुतिस्वरस इत्यभिसंधेः (वैतु. वें. सा. च भुज्युरेव अरावा इति व्यशेषीति कृत्वा पर्षन् इति क्रिप. प्रपु१ सदपि मपु२ भावयित्वा व्याचक्षाणौ; PW. प्रमृ. च दैवताभिसंबन्धेन परस्याऽप्यात्मीयभावस्य महिमानमपश्यन्तः गपू. व्यु. चाऽर्थश्च वितथं प्रतर्कुकाः) ।

६८, ७; ८, २८, ४; ९, २१, ५; १०,३७, १२[a]; -राव्णः ऋ १, ३६, ⌊१५ (७, १, १३)⌋; १६[b]; ८,६०,१०[b]; ९,⌊१३,९; ६३,५ (३९,५)⌋; ६१, २५; कौ १,५१०;२,५४५;५६३; ८९५; जै १, ५२, १४; ३, ४३, १; ४४, ९; ४, १४, २; -राव्णे ऋ ७,३१,५; शौ २०,१८,५.

१अ॒रि[c]- -रयः खि ४, ५, १; -रये ऋ ६, १३,५; -॑रिः ऋ १,४, ६; ९,१०;१५०, १; ७,६४,३; ८,२,१४?[d]; ५१, ९; ७२, १६; ९, ७९, ३; १०, २८, १; ३९, ५; खि ३, ३, ९; ५, ११, १; मा ३३, ८२; का ३२, ६, ११; कौ १, ९७; २, ९५९; जै १, ११,१; ४,१९,१; शौ २०,६८, ६; ७१,१६; १२७, ११; -रिम् ऋ २,८,२;५,४८,५;-॑र्यः[e] ऋ १,७०,१; ७१,३; ७३,५;११८, ९; १२२,१४[f]; १६९,६; १८४, १[g]; १८५, ९; २, १२, ४[h]; ५; १३, १५; ३, ४३, २[g]; ४, २, १८[g]; १६, १९; २०, ३[i]; २९,१; ३८, २; ४८, १; ⌊५०, ११; ७, ६४, ५; ६५, ५; ९७,

a) =सपा. तैआश्रा ६० माश्रौ २,५,४,९ प्रमृ. । तैब्रा ३,७,११,२ आश्रौ ३,१३,१८ प्रमृ. अरायुः इति पाभे ।

b) सतोबृहत्यां विषमयोर्जगतयोः पादयोरवसाने लगौ स्याताम् (तु. तृतीये पादे) इति कृत्वा अ॒रावणः इत्येवमत्र मूलतः पाठः संभाव्येत ( येनाऽक्षरद्वयेनोनेऽत्र पादेऽक्षरमप्येकं सुपूरं स्याच्छन्दश्च सुपठमित्यभिसंधिः ⌊तु. L ५२५⌋) ।

c) √*अर् (प्राप्तौ वा संसर्गप्रतिबन्धे वा) + इः प्र. उसं. (पाउ ४, १४०) । तत्-स्वरः । ननु स्वामि-स्तोत्राद्यर्थपरं प्राति. अन्यच्च शत्रुपरं चाऽन्यदिति प्रागर्वागभिमतं विवेकं (तु. या. ⌊५,७⌋ प्रमृ.) आदाय पृथगङ्किते द्वे प्राति. किमिति न निर्दिश्येयातामिति । व्यु. च वृत्ते च विशेषाऽभावाच्छब्दतोऽभेदप्रतिपत्तेरिति । ननु शत्रु-परस्य प्राति. अ + *रि- (< √रा ⌊दाने⌋ भावे) बस. इति कृत्वा प्रकाराऽन्तरेण व्यु. इष्यतां (वैतु. या. गपू.) तेन च प्राति. भिन्ने निर्दिश्येयातामिति । नेति । कथमिति । उक्ताया व्यु. अन्यथासिद्धत्वादिति । कुत इति । गतितत्प्रतिबन्धप्रभृत्यनेकाऽर्थवाचकत्वेनोपगतस्य सतः √*अर् 'संसर्गप्रतिबन्धे' (तु. यस्था. टि.) इत्यस्यैव तत्तदर्थवाचकस्य सतः १अरि- इत्यस्य मूलतयाऽभ्युपेयत्वादिति । अथ तत्र तत्र विषयविभागे विदुषां वैमत्यादपि भिन्ने प्राति. न निर्दिश्येयातामिति । कथमिति । उच्यते । तद् यथा । ऋ १, ४, ६ इत्यत्र शत्रु-पर इति सा. । न तथेति PW. प्रमृ. । ऋ १, ७३, ५ इत्यत्र शत्र्वर्थ इति सा. PW. च । न तथेति GW. । ऋ १, ११८, ९ इत्यत्र शत्र्वर्थ इति सा. PW. च । न तथेति NW. । ऋ १, १८४, १ इत्यत्र शत्र्वर्थ इति PW. । न तथेति सा. GW. च । एवमन्येष्वपि भूरिसंख्याकेषु स्थ. प्रतिपत्तिभेदो भवति । अथाऽयाऽवधि प्रसिद्धिं प्राप्तवतो विषयविभागस्याऽपर्याप्तत्वादपि द्वे एव भिन्ने प्राति. निर्दिश्येयातामिति नोचितम् । तथाहि । मा ६, ३६ इत्यत्र प्रजाऽर्थः साक्षाच्छ्रौतप्रमाणोपबृंहितो भवति (तु. माश ३, ९, ४, २१) । ऋ ९, ७९, ३ इत्यत्र वृक- इत्यस्य साहचर्याद् हर्यर्थः संभाव्येत । एवमनुसंधानभूयस्त्व-निबन्धना विशिष्टतराऽर्थभूयस्त्व-प्रसिद्धिः संभवेदिति किमु वक्तव्यम् । ननु तत्तत् स्थ. सम्यगनुसंधाय तत्तदर्थविषयविभागमनुपतन्ति कामं तानि तानि भिन्नभिन्नानि प्राति. निर्दिश्येरन्निति । सत्यम् । एवमेव कर्त्तव्यं न त्विहेति । तत् कुत्रेति । वैश. इति । कुत इति । अर्थविवेकाऽधीन विषयविभागाऽनुपातिनो निर्देशविभागस्य तत्रैव प्राप्ताऽवसरतरत्वाच्चाऽनुसंधेयसाधनसामग्रीसमृद्धिजस्य-पर्याप्ततरस्य विभागप्रकारस्य संभवाच्चेति । अथ किमिति २अ॒-रि- इतीहाऽपि पृथग् निर्दिश्येतेति । स्वरतो भेदात् व्यु. भेदस्य शब्दस्वाभाव्य-प्राप्तत्वादिति । अत्र यत्र यत्र अ॒र्यः इति शब्दरूपं १अरि- इत्यस्य द्वि३ वा पं१ वा ष१ वा सत् १अ॒र्य- इत्यस्य प्र१ इतीवाऽन्येषां मिथ्या प्रतीतं भवति तत्र तत्र यस्थ. टि. समकेतीति दिक् (तु. टि. इहैव अरे इति) ।

d) शोधः पाभे. च कौ १,२२५ रयिः द्र. ।

e) द्वि३ ।

f) वा. द्वि३ सस्थ. टि. ꣹आजगमुषीः द्र. (तु. PW. GW. प्रमृ. ; वैतु. वें. ⌊९१⌋, सा. <१अ॒र्य- इति) ।

g) १अ॒र्य- इत्यस्य रूपम् इति सा. तद् विमृश्यम् ।

h) १अ॒र्य- इत्यस्य रूपम् इति PW. तच्चिन्त्यम् ।

i) यत्तु १अ॒र्य- > अ॒र्यः (स१) ='इन्द्रः' इतीव PVS. (१७२ टि. १) इत्यत्रोक्तं भवति । तच्चिन्त्यम् । त्वया इति पदेन तस्य गतार्थत्वात् ।

९]; ५, २, १२; ३३, २; ६; ३४, ९; ५४, १२; ६, १४, ३; [१५, ३ (६६, ३३); १०, ११५, ५]; १६, २७[२]; २०, १; २४, ५[a]; २५, ७; ३६, ५[a], ४५, ३३; [४८, १६; ५९, ८]; ७, ८, १; २१, ९; ३४, १८; ४८, ३[१]; ५६, २२; ६०, ११; ६८, २; ८३, ५; ९२, ४; ८, १, ४; २१, १६[a]; २४, २२[a]; ३४, १०[b]; ३९, २; ४८, ८; ६०, १२; ६५, ९[a]; ६६, १२; ९४, ३; ९, २३, ३; [६१, ११; १०, १९१, १]; ७९, [१; १०, १३३, ३]; १०, २०, ४; २७, ८[२]; ४२, १; ५९, ३; ७६, २; ८६, १[a]; ११६, ६[a]; १४८, ३; मा १५, ३०[c]; २६, ३; १८[c]; का १६, ५, ११; २८, २, १; तै १,८,२२, २; २, ६, ११,४: ४, ४,४, ४; मै २. १३, ७; ४, १४, ४; १५; काठ २, १५; ४, १६; ८, १७; १७, १८; ४०, ११; कौ १, ७०; ५५५; २, २४; ११५२; ३, १, ८; जै १, ७, ८; ५७, २; २, ५. ५; ३, १, ३; ४, १,६; १०, १०; शौ ६,६३, ४; १८, ३, २३; २०, ३४, ४; ५; ६६, १; ८५, ४; ८९, १; ९५ ४; १२६, ३; पै १३, ७, ४; ५; १९,७,१].

अरी[d]- -री. मा ६, ३६; का ६, ८.७; मै[e] १, ३, ४; ४, ५, ७; काठ[e] ३,१०; क २,१७; -र्यः[f] कौ १,३२७; जै १,३४,५.

अरे[g] मा २३,५५;५६; का २५, १०,३;४; मै ३,१,४.

अरि-क्लव[h]- -वेभ्यः पै १६, १०४, २[i].

अरि-गूर्त[j]- -र्तः ऋ १, १८६,३.

अरि-धायस्[k]- -यसः ऋ १, १२६,५.

अरि-ष्टुत[l]- -तः ऋ ८,१,२२.

२अ-रि[m n]- -रिः शौ ७, ९३,१[१]; १३,१,२९[o]; पै २०,३२,७[१].

अ-रिक्त[m]- -क्तः[p] काठ ४०, ५; -¶क्ताः तै ६, ४, ९, ५; काठ २७, ५; क ४२ ५; -¶क्तानि तै ६ ४, ९, ५[१]; -क्ताय तै ७ ३,२०,१; काठ ४३,१०.

[a]) तु. टि. अर्युः ऋ १,१८४,१।

[b]). अर्य इति सं१ इति पठन् सा. चिन्त्यः।

[c]) १अर्य- इत्यस्य रूपम् इति उ. म. मन्वानौ चिन्त्यौ।

[d]) स्त्री. ङीष् (पावा ४, १, ४५ [तु. माश ३, ९, ४,२१]) ।

[e]) अरिः इति पाठः (वैतु. मै. मूको. १मे स्थ. अरीः इत्यपि पाठः) । एस्थि. अपि मै. काठ. च रूपम् स्त्रीत्वपरत्वं शाखान्तरसामान्येन सुस्थितं द्र.।

[f]) तरुषी->-षीः इत्येतत् सामानाधिकरण्यात् यनि. द्र. (वैतु. सा. अरीन् इति व्याख्यानात् १अरि- इत्यस्य पुं. द्वि३ एतदिति प्रतिपन्नः संश्चिन्त्यः) ।

[g]) मौस्थि. प्रजाऽर्थस्य सतः १अरि- इत्यस्य सं१ संभाव्येत (वैतु. WW. [१, ८९] शब्दार्थकाद् √*अला [तु. पैजा. अलाब-<आलाप-] इत्यतो निष्पादुकः) ।

[h]) =कर्तनगुणविशिष्टक्लवविशिष्ट-। बस. पूप. प्रकृतिस्वरम्।

[i]) सपा. काय ११४ : ३ अरिक्लवेभ्यः इति, शौ ११, २,२ अलिक्लवेभ्यः इति च पाभे.।

[j]) विप. (सूरि-) । अरिरिव वा अरिरिति वा अरि (=समृद्धं पुष्कलं यथा स्यात्तथेति कृत्वा क्रिवि. सत् न. द्वि१ [तु. PW. प्रमृ, WW १,६९; NW.]) इति वा गूर्त-(<√गॄ 'शब्दे') इति तस. थाथीयश्च स्वरः (वैतु. सा. सस. इति च, B. [JOAS ४५,१६५] च तृस. इति वदन्तौ स्वरतश्चिन्त्यौ (तु. पा ६,२,२;४८; विश्व-गूर्त- इति च) ।

[k]) विप. ([समृद्धधायोविशिष्टा-] गो-) । बस. पूप. प्रकृतिस्वरम्। उप. भावे धायस्- (वैतु. सा. कर्मणीति कृत्वा तृस. इति, GW. च कर्तरीति कृत्वा उस. इति च वदन्तौ स्वरतश्चिन्त्यौ [सा. उप. गुणवचनत्वे सति पूर. कृत्स्वरश्चेष्टव्यादस्य विशेषणद्वयस्यापि प्रकृते चाभावात्, GW. च कृदुत्तरपदप्रकृतिस्वरस्य प्राप्तत्वात् पूप. प्रकृतिस्वरानुपपत्तेरित्यभिसंधिः]) ।

[l]) विप. (इन्द्र-) । तस. थाथीयः स्वरः (तु. PW., MW., WW. [१, ६९]; वैतु. वें. सा. प्रमृ. तृस. इति वदन्तः पूर्ववच्चोद्याः) ।

[m]) तस. नञ्-स्वरः।

[n]) उप. √ऋ + कर्तरि इक् प्र. उसं. (पावा ३,३, १०८; यद्वा पाउ ४, १४२) । अनृजुः सन् परान् परिपन्थुक इति श्रुतिस्वारस्यम्।

[o]) पाभे. अग्निः पै १८,१७,९ द्र.।

[p]) सपा. पै १,९६,४ अरिष्टः इति पाभे.।

¶अ-रिक्तत्व[a]— -त्वाय[b] मै ४,६,२.

?अरितः[c] पै ४,१४,६.

अरित्र्—, १अरित्र-, २अरित्र— प्रभृ. √अर् द्र.

अ-रिप्र,प्रा[d]— -प्रम् ऋ ७, ४७, १; १०, ७१, १; —०प्रा ऋ ८, ८, ९; —प्राः ऋ ७, ९०, ४; १०, १२०, ९[e]; शौ १०, ५, २४; १६, १, १०; पै ५, २, ६; ६, १,९†; १६, १३०, २ ; —‡प्रे[e] शौ ५,२,९; २०,१०७,१२.

अ-रिषण्य[a,f]— -ण्या ऋ २,३९,४.

†अ-रिषण्यत्[a]— -ण्यन् ऋ १, ६३, ५; २,३७,३; ६, २४, ९; २५, २; मै ४,१४,१२.

अ-रिष्ट,ष्टा[a]— -०ष्ट शौ १९, ७,३?[g]; —०ष्ट शौ ८, २, २४ ; —ष्टः ऋ [१, ४१, २ (५, ५१, ४; ६७, ३)]; ८, २७, १६; १०, ६३, १३]; ५, १८, ३; ३१, १; १०, १६६,२; मा १०,२१; का ११,७,१; तै ३, २, ८, ४; शौ ४, ५, ७; ७, ५५, ५; ८, २, ८; १०, ३, १०; पै १, ६१, ४; ९६, ४[h]; २, ८७,५; ४, ६, ७; १३, ३, ११†; १५, १२, २†; १६, ३, ९; ५, ४; ६३, १०; —ष्टम् ऋ २, ३४, ७; मा २, १३[i]; का २,३, ११[i]; काठ ३४, १९[i]; पै ४,४०, २; —ष्टा मा ११, ६९; ३७, २०; का १२,७,४; ३७,३,६; तै ४ १,९, २; ५, ५, ९, २; मै २, ७, ७; काठ १६, ७; १९, १०; क ३०, ८; पै ११, १, ७; १८, १४,६; —ष्टाः ऋ २,२७,२; ७; १६; ५,४२,८; ६, १९, ४; ७, ४३, ५; १०, १२८, ३; तै ४, ७, १४, २†; ५, ७, ९, १; काठ ४०, १०†; शौ ५, ३, ५†; १०, ५,२३; पै १, १०६, २; ३, २६, ६; ५, ४, ५†; १५, ३; १६, ७; ६,८,८; १६, १००, ३[j]; १३०, ३; २०,२२, १; —†ष्टान् ऋ ७,४०,४; ९७, ४; काठ १७, १८; —ष्टानि शौ १९, ६०, २; —ष्टाभिः ऋ ६, ५४,७; —ष्टाम् ऋ १०, ८५, २४[k]; काठ २, ३; क १, १५; —ष्टासः शौ ७,५२, ७‡[l]; १९, ४७, २; २०, ८९, १०‡[l]; पै ६, २०,२; १७, ३५, ६‡[l]; १८, १४, २[m]; —ष्टे का २,६, २; —०ष्टे पै ८,७,३; —¶ष्टेन तै १, ६, ११, २[i]; मै ४, ५, ५; ६, ८; काठ २६, १०; क ४१, ८; —†ष्टेभिः ऋ १, ११२, २५; ८, २७, ४; मा ३४, ३०; का ३३, १, २४; —†ष्टैः ऋ ६, ६९, १; तै ३, २, ११, २; मै ४, १२, ५; काठ १२, १४.

अरिष्ट-गातु[n]— -तुः ऋ ५,४४,३.

अरिष्ट-गु[n/o]— -गुः शौ १०,३,१०; पै १६,६३,१०.

अरिष्ट-ग्राम[n]— -माः ऋ १, १६६, ६.

†अरिष्ट-ताति[p]— -तये ऋ [१०, ६०, ८–१०]; ९७, ७; मा १२, ८१; का १३,६,७; तै ४, २,६, ४; मै २, ७, १३; काठ १६, १३; क २५, ४; $शौ ३, ५, ५; ५, ३०, १२; ६, १९, २; ८०, २; ८, २, ६; ५, २०;७, ६; २७; १९, ३८, ३; $पै १, ३१, ३; ३, १३, ५; ५, १७, ८†; ७, ५, ११; ८, ३, ९; ९, १४, २; १५, १८, ८; २१, ६; १६, ३, ६; १४, ६†; २८, ९; १९,१६, १४†; १६; २४, ३†; २५, ६; २०, ५४, ९; —तिभिः

---

a) तस. नञ्-स्वरः ।

b) पाभे. अपहत्यै क ४२,५ द्र. ।

c) पाठः? सस्थ. टि. √सि > सितु- द्र. । वास्य-(सि-अ)रितः > सपा. पै ४, १४, २ वा सरितः इति पाभे. ।

d) बस. अन्तोदात्तः (पा ६,२,१७२) ।

e) सपा. °प्राः <> °प्रे इति पाभे. ।

f) विप.(अश्विन्-) । उप. √रिषण्य् + कर्तरि अच् प्र. ।

g) संबुद्धेरनपेक्षातः अरिष्टम् इति मूपा. संभाव्यते (तु. WI.) । अरिष्ट-मूलम् इतीव सा. विपठिषन् (तु. शंपा.) चिन्त्यश् छन्दोदोष-प्रसङ्गात् ।

h) पाभे. अरिक्तः द्र. ।

i) पाभे. विच्छिन्नम् तै १,५,३,२ प्रभृ. द्र. ।

j) पाभे. अनागसः शौ ९,५,२ द्र. ।

k) पाभे. स्योनम् तै १,१,१०,२ द्र. ।

l) सपा. ऋ १०, ४२–४४,१० शौ २९, १७, १०; ९४,१० अस्माकेन इति पाभे. ।

m) सपा. शौ १४,२,७२ °ष्टासु इति पाभे. ।

n) बस. पूप. प्रकृतिस्वरम् (पा ६, २, १) ।

o) उप. <गो- ।

p) भावे तातिल् प्र. (पा ४,४,१४४) । लित्-स्वरः ।

